[1]गता लाक्षारागद्युतिरधरदलात्पत्रवल्ली विलुप्ता,
कपोले पर्यस्तं तिलकमलिकतो लम्बितः केशपाशः ।
च्युतः कर्णोत्तंसः करमणिवलयं स्रस्तमस्यास्तथापि,
प्रियेण [2]प्रत्यग्रः प्रथयति महतीं संगमो हन्त शोभाम् ॥ ३३८.१ ॥

म्रौ भ्रौ तौ गौ चित्रमाला छैचैः ॥ ३३९ ॥

मरभनततगगाः । छचैरिति सप्तभिः षड्भिश्च यतिः । यथा –

[3]सा काङ्क्षत्यन्यमेवायमपि वत तां सारसौन्दर्यलक्ष्मीर्-,
एषा चैतं वराकी तरुणनिवहोऽमूं च लावण्यपुण्याम् ।
एवं प्रत्यग्रकेलीकुशलललितैर्बद्धहासं वसन्ते,
देवः पुष्पायुधोऽसौ रमयति रतिं दर्शयंश्चित्रमालाम्[4] ॥ ३३९.१ ॥
सुप्रभेत्यन्यः ॥ ३३९.१ ॥

म्नौ स्नौ म्यौ ल्गौ सद्रत्नमाला ङजैः ॥ ३४० ॥

मनसनमयलगाः । ङजैरिति पञ्चभिरष्टभिश्च यतिः । यथा –

सन्ध्यान्ते प्रतिदिशमियं समुदिता तारावतिः शोभते,
[5]श्यामाया अभिसरणकेलिरभसाद्भ्रष्टेव मुक्तावलिः ।
यद्वा व्योमनि मनसिजेन लिखिता जैत्रप्रशस्तिर्निजा,
विस्फूर्जद्घनतमतमिस्रफणिनां सद्रत्नमालाथवा ॥ ३४०.१ ॥

भीरसल्गा नन्दकम् ॥ ३४१ ॥

भगणचतुष्टयं रसलगाश्च । यथा –

[6]अद्भुतसंगरसागरमन्थनसंभवां कलयन् श्रियं,
दोष्णि दधद्यसुधावलयं च कुमारपालमहीपते ।
त्वं बलिराजनियन्त्रणविश्रुतविक्रमः पुरुषोत्तमः,
केवलमेष जगद्विजयी त्वदसिर्द्विषां न तु [7]नन्दकः ॥ ३४१.१ ॥

1) गता लाक्षेति – चुम्बनेनेति शेषः । विलुप्तेति – अङ्गमर्दनेनेति । 2) प्रत्यग्रो नवीनः कथयति । 3) सा काङ्क्षत्यन्यमेवेत्यत्र सा नारी अन्यं पुरुषं काम्यति । स तु पुमान् तां दयिताम् । पुनः एषा सारसौन्दर्यलक्ष्मीर्वराकी सती एनं प्रत्यक्षदृष्टं पुमांसम् । तरुणपुरुषनिवहः अमुं लावण्यपुण्यां एवंविधां अभिलषति । एवं नूतनकेलिनिपुणविलासैः बद्धहासं यथा भवति तथा कामः रतिं दयितां रमयति । 4) चित्रवर्णमालां अनया रीत्या वसन्ते दर्शयन्नित्यर्थः । 5) सन्ध्यान्ते प्रतिदिशमित्यत्र श्यामाया षोडशवर्षदेशीया कामिनी तस्याः । 6) अद्भुतेत्यत्र संग्रामसमुद्रमथनोद्भवाम् । 7) नन्दको हर्षकरः । पक्षे विष्णोः खड्गस्य नन्दक इति नाम । यदाहुः – शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तु नन्दक इति ।

१ छछैः O. २ चैतं वराक्य A; चैरं वराकी E. ३ रत्नमाला FGH. ४ तमतमिस्र DMP.

**भ्नौ न्भौ भ्रौ ल्गौ कामलता ॥ ३४२ ॥**

भरनभभरलगाः। यथा—

कौतुकमात्रमेव भवतो यदि शस्त्रपरिग्रहे तदा,
चापशिलीमुखान् घटयितुं कुरु चूतदलावमोटनम्।
कस्य मनः करोति न हि वश्यमसौ पुरतो यतः स्फुरन्,
काम लतावलीतरलनो मलयानिल एष ते सखा ॥ ३४२.१ ॥

उत्पलमालिकेत्यन्ये ॥ ३४२.१ ॥

**भ्नौ य्नौ न्रौ ल्गौ दीपिकाशिखा गचैः ॥ ३४३ ॥**

भनयननरलगाः। गचैरिति त्रिभिः षड्भिश्च यतिः। यथा—

प्राक्तने[1]सुकृतसमूहे [1]वलवदिह समुल्लसत्यपि,
[2]दुर्नयकरणमनीषा श्रियमपहरति क्षणान्नृणाम्।
पश्यत यदनुपभुक्तेऽपि हि विनिहिततैलपूर्णे,
निर्भर[2]चलितसमीरो [3]दलयति खलु दीपिकाशिखाम् ॥ ३४३.१ ॥

**त्भौ ज्भौ ज्भौ ल्गौ शशाङ्करचितम् ॥ ३४४ ॥**

तभजभजभलगाः। यथा—

त्वं निर्जितोऽसि निरवद्यया [4]वरतनोर्मुखाम्बुजरुचा,
विस्तीर्णनेत्रललितैः कुरङ्गहतकोऽयमप्यवजितः।
युक्तं शशाङ्क रचितं त्वया [5]यदमुना सदैक्यमधुना,
संगः समानगुणयोगिभि[6]र्भवति देहिनां [7]समुचितः ॥ ३४४.१ ॥ २०॥११

**प्रकृतौ म्रौ भ्नौ यिः स्रग्धरा छछैः ॥ ३४५ ॥**

मरभना यगणत्रयं च। छछैरिति सप्तभिः सप्तभिर्यतिः। यथा—

आवासः पर्णशाला वपुषि च वसनं नूतना त्वक्तरूणां,
पाणावापाढयष्टिः[8] शिरसि च चिकुरैर्नव्यगुम्फो जटानाम्।
कर्णेऽक्षस्रग्[9] धरायाः परिवृढ[10] विपिने त्वद्भयात् संप्रतीत्थं,
वृत्तिर्द्विट्चक्रहोभिस्त्वदरिनृपजनैः शिक्षिता तापसानाम् ॥ ३४५.१ ॥

---

1) प्राक्तनेत्यत्र बलवन्मुग्धरित्यर्थेऽव्ययम्। 2) दुःखं नयन्ति इति दुर्नयानि तानि करणानि कार्याणि तेषामिच्छा। 3) स्फोटयति। 4) त्वं निर्जितो[सि] निरत्यत्र कामिन्याः। 5) अमुना मृगेण। ऐक्यं मैत्र्यम्। 6) गुणैः। 7) समुचितो योग्यः। 8) आपास इत्यत्र आपाढो व्रतिनां दण्डः। 9) अक्षस्रग् अक्षमाला। 10) पृथ्व्याः स्वामिन्।

---

१ प्राक्तने N. २ बलित॰ N.

**त्रौ भ्रौ ज्भौ रः कथागतिः[1] ॥ ३४६ ॥**

तरभनजभराः। छ्छैरिति यतिः। यथा—

[1]केष्वप्यखर्वगर्वाद्विधुरितभुवनेष्वनर्गलगर्जितैरु,
अम्भोधरेष्विवाशु श्रवणपथगतेष्वभूद्विनिमीलितम्।
[2]आखण्डलस्य कामप्यभजत नयनासितोत्पलकाननं,
प्रीतिं चुलुक्यचन्द्र प्रकृतनृपकथागते त्वयि तु क्षणात् ॥ ३४६.१ ॥

**भ्रौ त्रौ त्रौ रो ललितविक्रमो ऽैः ॥ ३४७ ॥**

भरनरनरराः। वैरिति दशभिर्यतिः। यथा—

सद्गुणरत्नरोहणगिरे यशोधवलिताखिलाशामुख,
द्वेषिवधूमुखाम्बुजविधो वयं किमिव वर्णयामस्तव।
यस्य वशंवदत्रिभुवनश्चिरं विबुधसुन्दरीमण्डलैर्,
जम्भरिपोश्चमत्कृतिरसं दधल्ललितविक्रमो गीयते ॥ ३४७.१ ॥

**मौ तनिसा मत्तक्रीडा जङैः ॥ ३४८ ॥**

मद्वयं तगणो नत्रयं सश्च। जङैरिति अष्टभिः पञ्चभिश्च यतिः। यथा—

नो जानीते कृत्याकृत्यं विलुठति च [3]धरणितलशयने,
भूयो भूयो मूर्च्छां धत्ते द्रढयति न शिथिलमपि वसनम्।
[4]अर्थापेतं निःसंबन्धं वचनमपि वदति नदतितरां,
मत्तक्रीडामात्ता[5] बाला सुभग तव [6]नवविरहविधुरा ॥ ३४८.१ ॥

**रजतनिसाश्चन्दनप्रकृतिः ॥ ३४९ ॥**

रजता नत्रयं सश्च। यथा—

दर्शनाद्यदीह संतापमपहरति तदपि बत [7]तया,
नार्जितं धनं प्रभूतं जरसि सुखदमतिसरलतया।
किं तु चन्दनप्रकृत्या सरि सततमपि फलरहितया,
[8]दुर्भुजंगधृष्टया यौवनमिदमफलमहह गमितम् ॥ ३४९.१ ॥

---

1) केष्वप्यखर्वं [ति]–केष्वपि भूपालेषु। 2) इन्द्रस्य सहस्रनेत्रकमलवनं त्वत्कथाश्रवणेन प्रीतिं प्राप यत्पूर्वमन्येषां दुर्दान्तराज्ञां कथाश्रवणेन मीलितं समभूत्। मेघगर्जास्ववत्। 3) नो जानीते इत्यत्र धरणीतलमेव शयनं यस्येति। 4) अर्थरहितमाकाङ्क्षाहीनम्। 5) आत्ता प्राप्ता। 6) नवीनविरहपीडिता। 7) दर्शनाद्यदीत्यत्र तयेति–प्रकृत्या। 8) दुष्टभुजंगधृष्टतया यथा दुष्टभुजंगः यत्नेन फलं नार्पयति।

---

१ छ्छैः added in GH. २ ललिता० G; sūtras 347-362 dropped in H. ३ दद्यति N. ४ धृष्ट्या P.

**न्जभजिराः सिद्धिः ॥ ३५० ॥**

नजभा जत्रयं रश्च । यथा–

सववनमत्पुरंदरशिरःशुचिरत्नकिरीटमालिका,
विमलमयूखशेखरितपादनखद्युतिजालशालिनम् ।
विपुलदयानिधिं [1]प्रणयिकल्पतरुं भजत जिनेश्वरं,
यदि [2]भवकातरस्त्वमिह वाञ्छसि सिद्धिमनुत्तमां सखे ॥ ३५०.१ ॥

*चित्रलता, रुचिरा, शशिवदना चेत्यन्ये ॥ ३५०.१ ॥*

**नजीभ्रा वनमञ्जरी ॥ ३५१ ॥**

नगणो जगणचतुष्टयं भरौ च । यथा–

सह धनुषा समदो मदनः किल [3]शीतदीधितिमौलिना,
सुहृदिह भस्म कृतस्तव [4]दीप्तहुताशपिङ्गलया दृशा ।
इति हि मधो कुमते स्मर मा विचरान्तिके तरलभ्रुवां,
विरहजुषां सकलज्वलिताङ्गभृतां दधद् वनमञ्जरीः ॥ ३५१.१ ॥

**त्री र्नौ रस्तरंगः ॥ ३५२ ॥**

रनरनरनराः । यथा–

निर्ममो भव विधेहि पञ्चपरमेष्ठिसंस्मरणमन्वहं,
संयमं कुरु भज क्षमां यदि समीहसे [5]सुखमनश्वरम् ।
यौवनं किल तडिल्लताचपलमभ्रचञ्चलमिदं धनं,
जीवितव्यमपि मारुताहतसरित्तरंगतरलं सखे ॥ ३५२.१ ॥ २११८ ॥

**आकृतौ भ्री त्री त्री न्गौ मद्रकं जैः ॥ ३५३ ॥**

भरनरनरनगाः । जैरिति दशभिर्यतिः । यथा–

देव जगत्त्रयैकतिलक प्रभो [6]प्रणयिलोककल्पविटपिन्,
पुण्यवतां [7]शिरोमणिपदव्यभाजि जिननाथ तैरिह जनैः ।
ये विकचैश्चिराय चरणारविन्दयुगमर्चयन्ति कुसुमैर्,
मद्रकमन्दगीतिभिरभिष्टुवन्ति च चरित्रमत्रभवतः ॥ ३५३.१ ॥

---

1) सववनमदित्यत्र प्रणयिनो भक्ताः । 2) भवात्संसाराद् कातरो भीतः । 3) सह धनुषेत्यत्र शीतदीधितीति–ईश्वरेण । 4) दीप्तेति–तृतीयलोचनेन । को भावः ? कन्दर्पो हि धनुषा बलवान् तद्धनुः शकलीकृतं स च विनाशितश्च । त्वं च तस्य मित्रम् । यदि ईश्वरेणैतेन लोचनेन प्रज्वालितः । किं चासां स्त्रीणां विरहयोगात् [अङ्गं] दाहानुपक्तमत एव त्वामपि मित्रबलाभावात् भस्मीकरिष्यतीति भावः । 5) अनश्वरं अविनाशि । 6) देव जगत्त्रयैकेत्यत्र भक्तभवि[क]कल्पपादप । 7) शिरोमणि० मुकुटभावं व्यभाजि एवम् ।

---

१ जगणत्रयं GNP. २ वनमंजरीः N. ३ अनध्रिरं A. ४ पदं व्यभाजि NEP. ५ सुमन० A.

**स्तौ तौ स्रौ र्गौ महास्रग्धरा जछैः ॥ ३५४ ॥**

सततनसररगाः । जछैरिति अष्टभिः सप्तभिश्च यतिः । यथा —

"अभि नागान्याति योऽयं स मम मम पुनर्यच्छिरो" हुंकरोति,
प्रचैलोऽयं "यत्कबन्धः प्रहरति स तु मे प्राणनाथोऽस्तु सख्यः ।
दलयन् यो दुष्टभूपानहमहमिकया स्वर्गसीमन्तिनीना,
परिशुश्रावेति वाचो वरवरणमहास्रग्धराणां रणेषु ॥ ३५४.१ ॥

**भृगौ मदिरा ॥ ३५५ ॥**

भृगाविति भगणसप्तकं गुरुश्च । यथा —

ह्रीविनियन्त्रणविभ्रममपाकुरुतेऽभिनवायतरद्वयसां,
प्रौढपुरन्ध्रिजनस्य यथा तिरयत्यपराधपदं सहसा ।
कोपपदेन च गोत्रपरिस्खलितं न च कारयते तदसौ,
कामसखी मदिरेह "सतर्पमभाजि चिरं किल कामिजनैः ॥ ३५५.१ ॥
लताकुसुममित्यन्ये ॥ ३५५.१ ॥

**मत्यनीगा वरतनुः ॥ ३५६ ॥**

मतया नगणचतुष्टयं गुरुश्च । यथा —

"चक्षु सौन्दर्यं मृगवध्वां परभृतयुवतिषु मधुरगिरं,
यातं हंसीषु स्मितमुद्यद्वनवविचकिलकुसुमततिषु ।
रोलम्बश्रेण्यां कचलक्ष्मीं वदनरुचिमपि विकचकमले,
न्यास कृत्वा सा खलु याता क्वचिदपि मम वरतनुरधुना ॥ ३५६.१ ॥

**म्सौ ज्सौ ज्सौ ज्गौ दीर्घार्चिश्छैः ॥ ३५७ ॥**

मसजसजसजगाः । छैरिति द्वादशभिर्यतिः । यथा —

प्रायो दुष्कृतकर्मसु स्वयममी प्रयान्ति पिशुनाः सहायतां,
यद्वत्तद्वदनिन्दनीयसुकृतक्रियासु भृशमन्तरायताम् ।
वह्नौ सततजन्तुसङ्कुलमहावनप्लुषि सरसा समीरणो,
दीपार्चिष्यखिलोपकारिणि भवत्यकाण्डकुपितान्तकः खलु ॥ ३५७.१ ॥
२२।५ ॥

**विकृतौ न्जौ भ्जौ भ्जौ भ्लौ गोऽश्वललितं टैः ॥ ३५८ ॥**

नजभजभजभलगाः । टैरित्येकादशभिर्यतिः । यथा —

---

1) अभिनागानित्यत्र नागान् हस्तिनोऽभि । समराङ्गणे युध्यमानेषु भटेषु सुराङ्गनानां परस्परं वचनप्रसङ्ग । 2) यस्य शिरः यच्छिरः । 3) मस्तकहीन वपु कबन्धः । 4) सतर्पमिति — सतृष्णम् । 5) चक्षु सौन्दर्यमित्यत्र मृतपत्नीकः पुमान् कथित भति यकि मम कान्ता एतानि वस्तूनि यत्तु मुक्त्वा गता ।

---

१ ०ग० म dropped in ४. २ प्रबलोष ABP; प्रभोर्य D. ३ हसीषु N. ४ कुसुमततिषु M.
५ जगौ N. ६ दीपार्चि है १. ७ गद्य ललित N.
११ छन्दो०

निरपायमिन्दुकलनमण्यपारमादुर्भिदोरमतुलं,
निरभ्रिनन्दसो पश्यन्दनुविरियरन्तानुपुल्म् ।
नवघनचतुर्ष्वेकत्र इत्र विरच्य पतुष्पत्यापि पततन्-,
परतारिन्द्रायोलतिविदूरं" इद बजगालिराजति ॥ ३५८.१ ॥
अत्र केचित्सप्तमभगणस्थाने जगणमिच्छन्ति ॥ ३५८.१ ॥

**मौ तौ नौल्गौ मत्ताक्रीडा जर्डैः ॥ ३५९ ॥**

ममता नगणचतुष्टयं लघुगुरू च । जर्डैरित्यष्टाभिः पञ्चभिश्च यतिः । यथा –
"हस्ताक्षेपैर्वारंवारं विदलयति किल निकरमनिरहां,
पादानुपैः क्षोणीन्द्राणां विघटयति दशनकुलिशविकटैः ।
वेगावेगात्सादम्यैर्मिलयति च प्लुतपटलमुरुपवेद्,
इत्थं मत्ता क्रीडामाने विरचयति नृपवर वा करिघटा ॥ ३५९.१ ॥

**ताज्जल्गाः शङ्खः ॥ ३६० ॥**

तगणात्परं जगणषट्कं लघुगुरू च । यथा –
चौलुक्यनरेश्वर वैभवभासुर वीरं गभीरिमवारिनिधे,
सौन्दर्यमनोभव कान्तिनिशाकर सेवककल्पतरो भवतः ।
यो नाम गुणानिह संकलयेत् किल वच्मि तु किंचन ते यशसां,
"संपर्कमवाप्य स "शङ्खधरोऽभवदद्रिसुताकमितुः" सदृशः ॥ ३६०.१ ॥

**नाद्धंसगतिः ॥ ३६१ ॥**

नगणात्परं जगणषट्कं लघुगुरू च । यथा –
मदनगजेन्द्रमहोदयमादधती सहसा विमलप्रसरल्-,
लवणिमसिन्धुरनिद्रितनीलसरोरुहचारुलसन्नयना ।
विशदतराम्बरसंपदियं रजनीकरबिम्बमुखं दधती,
शरदिव संश्रितहंसगतिर्युवतिर्विदधाति न कस्य मुदम् ॥ ३६१.१ ॥
महातरुणीदयितमित्यन्ये ॥ ३६१.१ ॥

**श्री रनौ रल्गाश्चित्रकम् ॥ ३६२ ॥**

रनरनरनरलगाः । यथा –

1) निरपेत्यत्र विदूष्ट आकर्षितः । 2) हस्ताक्षेपैरित्यत्र प्रसारणैः भनक्ति वृक्षाणां समूहम् । पादाः पर्यन्तपर्वताः । विघटयति चूर्णयति दन्तवज्रस्पर्शनैः । 3) चौलुक्येत्यत्र संबन्धं प्राप्य । 4 नारायणः । 5 अद्रिसुता पार्वती तस्याः कमिता भर्ता शिव. तस्य समानः श्वेतवर्ण इत्यर्थः ।

१ श्च ललितैः N. २ फणिप० N. ३ वररिपटा A. ४ धीर CDAP. ५ वंशगति GH.

श्रूयतां नृपकुमारपाल तव दर्शनत्वरितया व्यधायि यत्,
पादतामरसयोः सुवर्णकटके कराम्बुरुहयोश्च नूपुरे।
हारदाम च नितम्बबिम्बफलके भृशं हृदि च रत्नमेखला,
निर्ममे जतुरसोऽलिकेऽधरदले च [1]चित्रकमधीरचक्षुषा॥ ३६२.१॥

**भ्मौ स्भौ निल्गाश्चपलगतिः॥ ३६३॥**

भमसभा नत्रयं लघुगुरू च। यथा—

भूमिभृतामङ्केषु विलासं स्वरुचिसदृशमति[2] हि विदधती,
सत्वरमानीता स्फुटमुच्चैः पटह इव नदति यशसि निजे।
[3]दुर्ललिता स्तम्बेरमकान्तेव नृपवर [4]दृढतरगुणगणैः,
साधु भुजस्तम्भे भवता श्रीरतिचपलगतिरिह निगडिता॥ ३६३.१॥

**ज्सौ ज्सौ यिल्गा वृन्दारकम्॥ ३६४॥**

जसजसा यत्रयं लघुगुरू च। यथा—

तदंह्रिपरिताडनं सरभसं कचाकर्षणं स्वेच्छया चोर्जितं,
मुखाम्बुरुहचुम्बनं प्रति मुहुर्नखैर्दारणं निर्विशङ्कं जवात्।
नरेन्द्रतिलक [5]त्वदीयपरिपन्थिनां तुल्यकालं तदेतत्कृतं,
[6]शिवाभिरिह [7]संगरे [8]गगनसीम्नि [9]वृन्दारकप्रेयसीभिस्तथा॥ ३६४.१॥
२३।७॥

**संकृतौ भ्तौ न्सौ भौ न्यौ तन्वी ठैः॥ ३६५॥**

भतनसभभनयाः। ठैरिति द्वादशभिर्यतिः। यथा—

दन्तमयूखाः शशधररुचयो वागमृतं [10]रतिरमणधनुर्भ्रूः,
लोचनलक्ष्मीस्तुलयति कमलं नूतनविद्रुमसुहृदधरश्च।
चम्पकगर्भप्रतिकृति च वपुर्हंसगतेरनुहरति च [11]यातं,
वच्मि विशेषं कमपरमथवा रम्यमहो किमिव हि न हि तन्व्याः॥ ३६५.१॥

**नौ भौ ज्जौ न्यौ ललितलता छ्छैः ३६६॥**

ननभनजननयाः। छ्छैरिति सप्तभिः सप्तभिर्यतिः। यथा—

1) श्रूयतां नृपेत्यत्र चित्रकं तिलकं चपलनेत्रया। 2) भूमिभृतामित्यत्र अति हि भृशार्थेऽखण्डमव्ययम्। 3) दुर्ललिता उत्कटहस्तिनीव। 4) दृढतरेति—गुणा औदार्यादयः, पक्षे रज्जवः। नियन्त्रिता। 5) तदंह्रिपरीत्यत्र त्वद्वैरिणां समकालम्। 6) शिवाभिः क्रोष्ट्रीभिः। 7) संगरे संग्रामे। 8) गगनसीम्नि आकाशप्रदेशे। 9) वृन्दारकेति—देवीभिः। 10) दन्तमयूखा इत्यत्र रतिरमणेति—कामधनुर्वद् भ्रूः। 11) यातं गमनम्।

१ जतुरसोल्के P. २ ल्गौ च A. ३ दृढतरगुणै. साधु॰ N. ४ ल्गौ च A. ५ दारुणं ABCDN. ६ नरेन्द्र कृतं N; ७ च added in N. ८ मयूखाः G. ९ धनुर्भ्रूलो॰ N. १० रम्यमहो N.

परिमलविलुठन्मधुकरकबरी-[1]विरचितनिरवधिशोभाम्,
[1]अभिनवकुसुमस्मितसुभगरुचिं मृदुतर[2]किसलयपाणिम् ।
इह मधुसमये विलसति नियतं मनसिजशरपरिविद्धम्,
वनललितलतायुवतिमयमहो कलयति मलय[3]समीरः ॥ ३६६.१ ॥

**नौ रूर्मेघमाला ॥ ३६७ ॥**

नगणद्वयं रगणषट्कं च । यथा—

त्रिभुवनविजयाय बद्धाभिमानस्य [2]शृङ्गारयोनेः प्रयाणक्षणे,
कनकघटितद[4]ण्डमेतत्किमाभाति नीलातपत्रं लसत्सर्वतः ।
[3]नवतपविगमश्रिया दीप्रदीपेऽथ किं कज्जलार्थं धृतं [4]कर्परं,
[5]भ्रममिति विदधाति वीक्ष्योन्नतां मेघमालां जनो विद्युतालंकृताम् ॥ ३६७.१ ॥

भृङ्गाञ्जनीलालकेत्येके ॥ ३६७.१ ॥

**भृ[5]: सुभद्रम् ॥ ३६८ ॥**

भृरिति भगणाष्टकम् । यथा—

[6]शौर्यमृगेन्द्र चुलुक्यनरेन्द्र महत्त्वगिरीन्द्र गभीरिमसागर,
दोष्णि चिरं निखिलाचलसिन्धुयुतं वसुधावलयं तव विश्रमति ।
अद्भुतभारपरिश्रममुक्ति-[6]समुच्छ्वसितो[7] भुजगाधिपतिस्त्वयि,
[7]शंसति संततमेष सुभद्रमखण्डमहोदयमस्त्विति संप्रति ॥ ३६८.१ ॥

**भितनिसा द्रुतलघुपदगतिः ॥ ३६९ ॥**

भत्रयं तगणो नत्रयं सश्च । यथा—

[8]मुञ्चत नूपुरकङ्कणकाञ्चीः क्वणितभरविरचितकलकलाः,
स्वीकुरुताशुगतिं समयोऽयं न खलु समदगजललितगतेः ।
संभ्रमवान् स्ववधूरनुशासद्गिरिसरिदभिमुखमतिकृपणः[8][9],
संप्रति सिद्धपते तव याति [10]द्रुतलघुपदगतिरिपुनिवहः ॥ ३६९.१ ॥

**न्यौ भ्तौ निसौ संभ्रान्ता ॥ ३७० ॥**

नयभता नगणत्रयं सश्च । यथा—

1) परिमलेत्यत्र कबरी केशपाशः । 2) त्रिभुवनविजयेत्यत्र शृङ्गारेति—कामस्य । 3) नवतपेति—नवीनप्रावृट्लक्ष्म्या । 4) कर्परं कोसिउं इति प्रसिद्धम् । 5) भ्रमं भ्रान्तिम् । 6) शौर्यमृगेन्द्रेत्यत्र समुच्छ्वसितः उच्छ्वासं प्राप्तः । 7) शंसति प्रशंसति । 8) मुञ्चत नूपुरेत्यत्र पलायनसमये कलकलेति—शब्दानुकरणम् । 9) अतिकृपण इति—अतिदीनः । 10 द्रुतेति—क्रियाविशेषणम् ।

१ अभिनय N. २ किशलय B. ३ कलयसमीर॰ A. ४ दण्डमेतत् repeated in A. ५ भृ AN. ६ सुभद्रकं G. ७ समुद्धुषितो N. ८ कृपणान् N.

[1]रचयतु जन्मस्नानविधौ यस्त्रिजगदधिपचरमजिनपतेः,
सुरपतितुङ्गोत्सङ्गनिषण्णस्य किमपि बलविलसितमतुलम् ।
मृदुचरणाङ्गुष्ठाग्रसमाक्रान्तिविधुरचलितकनकशिखरि-,
स्फुटभयसंभ्रान्तामरयक्षोरगपति[१] निखिलदुरितदलनम् ॥ ३७० १ ॥

**म्सौ ज्सौ तौ भ्रौ विभ्रमगतिः ॥ ३७१ ॥**

मसजसततभराः । यथा –
दृष्ट्वा त्वत्पृतनातुरगमखुरोद्धूत धरित्रीरजो[२] गगनाङ्गणे,
[2]तत्तद्भूतिमती विहाय सपदि स्वा राजभानीमपि [3]प्रियजीविताः ।
गच्छन्तोऽनुगिरीन्[३] पलायनविधिप्रत्यूहहेतु मुहुः सहचारिणा,
दाराणा [4]कलहसविभ्रमगतिं निन्दन्ति चौलुक्यचन्द्र तवारयः ॥ ३७१ १ ॥
२४।७ ॥

**अभिकृतौ भ्मस्भनौगाः क्रौञ्चपदा ङ्ङजैः ॥ ३७२ ॥**

भमसभा नगणचतुष्टयं गुरुश्च । ङङजैरिति पञ्चभिः पञ्चभिरष्टभिश्च[४] यतिः ।
यथा –
[5]प्रोज्झ्य पुराणि त्वद्भययोगान्नृपवर भवदरिरतिशयविधुरो[6],
दूरमरण्य प्राप्य [7]कलत्रैः सह समजनि [8]गतिरयवशतृषितः ।
सारसनादात् स स्वयमादौ [9]प्रसरति कियदपि भुवमथ सहसा,
प्रेक्ष्य चकोरक्रौञ्चपदाङ्का ध्रुवमिह सरिदिति निगदति दयिताः ॥ ३७२.१ ॥

**नीसभिगा हंसलयो जछैः ॥ ३७३ ॥**

नगणचतुष्टयं सगणो भगणत्रयं गुरुश्च । जछैरिति अष्टभिः[५] सप्तभिश्च यतिः ।
यथा –
[10]भवशतविरचितनिरवधिसुकृतैस्त्वत्कृतधर्मपथोऽधिगत.,
[11]प्रणयिनि मयि कुरु तदसमकरुणा पश्य सुधारसपूर्णदृशा ।
अभिमततरमिति वितर जिनपते [12]शक्रफणीन्द्रनरेन्द्रनुत,
प्रतिदिनमपि तव पदकमलयुगे देव भवेयमहं सलयः ॥ ३७३.१ ॥

---

1) रचयतु जन्मेत्यत्र व युष्माक दुरितदलन वीरजिनस्य बलविलसित रचयतु निष्पादयतु इति क्रिया· सवन्ध । 2) दृष्ट्वा त्वत्पृतनेत्यत्र तत्तत्सपसपूर्णाम् । 3) प्रिय जीवित येषां ते प्रियजीविता । 4) कल हसवद्राजहस इव विभ्रमेण युक्ता गतिस्ताम् । 5) प्रोज्झ्य पुराणीत्यत्र त्यक्त्वा भवद्भयसबन्धात् । 6) विधुरो दीन· । 7) कलत्रैर्दारै । 8) गमनवेगवशतृषातुर । 9) प्रसरति त्वत्कटकागमनबुद्ध्या क्षीणा (स्त्रिय) पश्चान्मुक्त्वा स्वय अग्रे आगच्छति । 10) भवशतत्यत्र भवानां शतम् । 11) प्रणयिनीति–स्नेहभाजि । 12) शक्रेत्यादि इन्द्रधरणेन्द्रचक्रवर्तिनुत· ।

---

१ पति A २ पृथना N, ३ धरणीरजो B, ४ नु गिरि N ५ अष्टभि dropped in P
६ विर dropped in N

**त्यौ भौ नीगौ हंसपदा जैः ॥ ३७४ ॥**

तयभभा नगणचतुष्टयं गुरुश्च । जैरिति दशभिर्यतिः । यथा—

अम्भोजवनं व्याकोशमिदं सलिलमतिविमलमिति[1] घनसरसि,
भ्रान्तोऽपि हि मा कार्षीर्गमनं यदिह विचरति हरिणशिशुनयना ।
तस्या अतिरम्यां वीक्ष्य गतिं [2]निरुपमितिमतिशयमधिगतवतीं,
ह्रीतः सपदि त्वं हंस पदात् पदमपि चलसि न खलु नियतमदः ॥ ३७४.१ ॥

**न्जज्या नीगौ चपलम् ॥ ३७५ ॥**

नजजया नगणचतुष्टयं गुरुश्च । यथा—

क्वचिदपि चूतलतामुपभुङ्क्ते क्वचिदपि पिबति विचकिललतां,
क्वचिदपि चुम्बति माधविकां च क्वचिदपि परिसरति च लवलीम् ।
बहुविधपुष्पसमृद्धिनिधाने विलसति नवतरमधुसमये,
[3]चपलभुजंगविलासमजस्रं कलयति [4]मधुकर इह मुदितः ॥ ३७५.१ ॥

२५.४ ॥

**उत्कृतौ मौ तो निरसौ ल्गा भुजंगविजृम्भितं जटैः ॥ ३७६ ॥**

ममता नगणत्रयं रसलगाः । जटैरिति अष्टाभिरेकादशभिश्च यतिः । यथा—

कापि स्वैरं क्रूरक्रीडन्महिषशतमचकित[5]-चरत्कुरंगकुलं क्वचित्,
कापि क्रीडाव्यग्रक्रोडं[6] क्वचिदपि मदजटविहरन्मतंगजसंकुलम् ।
सिंहक्ष्वेडारौद्रं क्वापि क्वचिदपि विषविषममहाभुजंगविजृम्भितं[7],
श्रीचौलुक्यक्षोणीनाथ स्फुटमजनि भवदरिमहीभुजामधुना पुरम् ॥ ३७६.१ ॥

**मनूसगगा अपवाहो झचचैः ॥ ३७७ ॥**

मो नगणषट्कं सगगाश्च । झचचैरिति नवभिः षड्भिः षड्भिश्च यतिः । यथा—

[8]यः श्लाघ्यः प्रतिदिनमपि मदनदहनगरुडगमनचतुरास्यैर्यैः,
गेयो यः सुरपतिपरिषदि च किमपि मुदितविबुधरमणीवृन्दैः ।
चौलुक्यान्वयजलनिधिहिमकर कियदिह तव नृपवर तस्यैतद्,
यत्सर्वं कृतमखिलमपरथमपभटमपगजमपवाहं च ॥ ३७७.१ ॥

1) अम्भोजवनमित्यत्र इतिरत्र हेत्वर्थे । 2) निरुपमेति—निर्गता रूपेण(उप)मितिर्मानो(नं)यस्मात्स्तम् । 3) क्वचिदपीत्यत्र भुजंगो गणिकापतिस्तस्य चेष्टाम् । 4) भ्रमरः मुदितो हर्षं प्राप्तः सन् करोति । 5) कापीत्यत्र अचकितेति—शून्यत्वादिति शेषः । 6) क्रोडो वराहः । 7) विषविषेति—क्रीडितम् । 8) यः श्लाघ्य इत्यत्र मदनेति—ईश्वरकृष्णब्रह्मादिभिः ।

१ गुरुश्च A; २ निरुपममितिमति AC. ३ निरसा G. ४ महिषशतभ्रमचकितवरकुरंगकुल N. ५ विषमतर I; विष dropped in D; ६ झचचैरिति N. ७ चतुरास्यैर्यैर् N. ८ मिमुषि A.

**भो नौ स्मौ निल्गा आपीडो डैः[1] ॥ ३७८ ॥**

भननसमा नगणत्रयं लघुगुरू च । डैरिति[2] त्रयोदशभिर्यतिः । यथा –

[1]पश्य विविधवरविटपिनिकुञ्जश्यामीकृतविपुलतरकटकभूर्,
[2]आश्रमशतलसदिभहरिगैत्रीप्रेक्षारसवदमरयुवतिजनः ।
[3]रैवतकगिरिरियमिह पुरस्ताद्यस्मिन् जिनचरणनमनमिलिता-,
शेषसुरपतिपतदमलपुष्पापीडैर्भवति सुरभिरयमनिलः ॥ ३७८.१ ॥

**न्जौ न्सौ भनिल्गा वेगवती ॥ ३७९ ॥**

नजनसभा नगणत्रयं लघुगुरू च । यथा –

[4]नभसि भृशं स्तनति भरितदिक्कन्दरमभिनवजलधरपटले,
धृतमुदि नृत्यति चँ मधुरकेकाकलकलजुषि समदशिखिकुले ।
स्फुटितकदम्बकुटज-[5]सुमनःसर्जपरिमलमिलदलिनि च वने,
[6]मनसिशये च [7]भुवनजयसंवेगवति वत भवसि पथिक कथम् ॥ ३७९.१ ॥

**नजभजिभ्जल्गाः सुधाकलशो ढैः ॥ ३८० ॥**

नजभा जत्रयभजलगाः । ढैरिति चतुर्दशभिर्यतिः । यथा –

[8]अयमनुनीय सर्वसुरकार्यकृते मम वल्लभेन [9]दिविपत्पतिना,
ननु विनियोजितः [10]कवलितश्च तत स्त्रिपुरान्तकनयनहव्यभुजा ।
इति हृदये विचिन्त्य परिजीर्वयितुं [11]मकरध्वजं सपदि पूर्वदिशा,
नियतमुदासि[12] संप्रति [13]सुधाकलशः परिपूर्णशीतरुचिबिम्बमिपात् ॥ ३८०.१ ॥

२६५ ॥

उक्तादिजातिप्रकरणम् ।

---

1) पश्य विविधेति – समीपपृथ्वी । 2) आश्रमेति – तीर्थंगासं तन्महिम्ना उपशान्तवैरः । 3) रैवतेति – राजते इति क्रियाध्याहारः । 4) नभसि भृशमित्यत्र आकाशे गर्जिते । 5) सुमनः अनेकार्थे मालतीवाचकः । 6) मनसिशये कामे । 7) भुवनेति – सरभवति । 8) अयमनुनीयेत्यत्र पूर्वं द्वितारकदैत्ये पीडितजगत्त्रये इन्द्रेण ईश्वरं ध्यानाचालयितुं कामः प्रेषितः स च ईश्वरेण दग्ध इति श्रुतिः । आमर्दं कृत्वा । 9) दिविपत्पतिना – इन्द्रेण । 10) कवलितः कवलत्वं प्राप्तितः शंभुनयनाग्निना । 11) मकरेति – कामम् । 12) उदासीति – उत्पादितः । 13) अमृतकुम्भ. पूर्णचन्द्रच्छलात् ।

---

१ स्मो N. २ क्षैः O; डैः A. ३ लगौ च A. ४ ढैरिति चतुर्दशभिर्यतिः N. ५ सुरपतिपदपदतमल A. ६ लगौ च A. ७ च dropped in N. ८ परिजीवितुं A. ९ P. adds समर्थदायके.

**शेषजातौ मतिनायि मालाचित्रं टैः ॥ ३८१ ॥**

मसलगणत्रयं नगणद्वयं यगणत्रयं च एषां समाहारद्वन्द्वः । टैरिति एकादशभिर्यतिः । यथा –

पान्थाः शीघ्रं यात नातः परं वैः
क्षणमपि यदिह शुभं तत्र गत्वाश्रयध्वं,
कान्तां नो चेदत्र तां देवतां स्वां
स्मरत सपदि भवतो हन्त संहर्तुकामः ।
[1]कालोऽयं जीमूतनामाभ्युपैति
स्तनितवधिरितमहीमण्डलश्चण्डविद्युन्-,
मालाचित्रास्त्रप्रहारीति दूरात्
कथयति शिखिनिवहस्तारकेकारवेण ॥ ३८१.१ ॥ २७।१ ॥

**म्तौ य्तौ निर्सल्गाः प्रमोदमहोदयो घछटैः ॥ ३८२ ॥**

मतयता नगणत्रयं रसलगाश्च । घछटैरिति चतुर्भिः सप्तभिरेकादशभिश्च यतिः ।

यथा –

काप्युद्ग्रीवा [2]प्रास्थित बद्धोत्कण्ठं
करकलितशिथिलवसना दधाव च काचन,
[3]स्तम्भं दध्रे कापि च काचिद्वासी-
दतिशयितबहलपुलकाङ्कुरोल्लसिताङ्गिका ।
काचिच्चक्रे भूषणमङ्गे काचित्
तिलकमकृत नवमलिके[4] चुलुक्यमहीपतौ,
यात्रां कृत्वोपेयुषि[5] पौरस्त्रीणां
समजनि निरवधिरद्भुता प्रमोदमहोदयः ॥ ३८२.१ ॥

यथा वा –

[6]वन्द्या देवी पर्वतपुत्री नित्यं मधुमधुरकमलवदना पुरन्ध्र्यधिदेवता,
देवैः स्तुत्या किंनरगेया भक्त्यावरचरितमहिषमर्थनी जगत्त्रयनायिका ।
सिद्धैर्ध्येया केसरियाना कामं रणचतुररसिकहृदया त्रिलोचनवल्लभा,
वीरैः पूज्या दर्पणपाणिर्नूनं गुणनिलयलटभललिता सतीषु धुरंधरा ॥ ३८२.२ ॥ २९।१ ॥

---

1) पान्थाः शीघ्रमित्यत्र कालः कृतान्तः श्यामवर्णश्च । जीमूतनामा । इदं विशेष्यं न तु कालस्य विशेषणं इदं हि क्रियते । 2) काप्युद्ग्रीवेत्यत्र प्रास्थितेति – चचाल । 3) स्तम्भं जाड्यम् । 4) मल्लिके माळे । 5) उपेयुषि आगते । 6) वन्द्या देवीत्यत्र पर्वतेति – गौरी । पुरन्ध्रयधीति – पुरन्ध्रीणामधिदेवता सर्वोत्तमरूपेत्यर्थः । भवरचि ( r.चरि for चि )तेति – दुश्चरितम् । गुणेति – गुणनिलया चासौ लटभललिता चेति विशेषणकर्मधारयः । लटभं प्रधानम् ।

---

१ वक्ष्यणमपि A. २ नि.र्सल्गाः F; निरसल्गा GHP. ३ पुरन्ध्र्यपि देवता N. ४ मथिनी O.

**द्विर्भजसना भ्यौ नृत्तललितम् ॥ ३८३ ॥**

द्वौ वारौ भजसन इत्येते गणाः । भयौ च केवलौ । भजसनभजसनभया इति ।

यथा–

[1]अथ कलहंसलेलने ललितमन्थरगतौ
सपदि मानेय सपत्नरहितं स्वं,
कोकिलविलासिनि विधेहि कलगीतिरचना-
चतुरतामदममन्दमतिमत्ता ।
दुर्ललितनृत्तललितं [2]युवमयूर रचय
त्वमपि संप्रति चिराय गतशङ्कः,
सर्वगुणकेलिसदनं चकितबालमृगलो-
लनयनां प्रियतमामिह विना ताम् ॥ ३८३.१ ॥ ३०।१ ॥

**द्वादश ना ल्गौ ललितलता त्रिर्भैः ॥ ३८४ ॥**

द्वादश नगणा लघुर्गुरू च । त्रिर्भैरिति त्रीन् वारान् दशभिर्यतिः । यथा–

[3]जिनचरणसरसिरुहपरिचरणरतमनसि
परमशममुपदधति कलितपरमलये,
विषयवलदलनजुषि वत तरुणि विफलमति-
चतुरतरनयनगतिमिह यतिनि तनुषे ।
व्रज मदन निजसदनमपसरणमुपरचय
पिकतरुण रणरणकमुपजनयसि न हि,
प्रकटयसि मधुसमय किमिति नवमदमुदित-
मधुपकुलकलरणितमुखरललितलताम् ॥ ३८४.१ ॥ ३८।१ ॥

**मौ तनीजभाः पिपीलिका जर्णैः ॥ ३८५ ॥**

मद्वयं तगणो नगणचतुष्टयं जभराः । जर्णैरिति अष्टभिः पञ्चदशभिश्च यतिः ।

यथा–

[4]निष्प्रत्यूहं पुण्यां लक्ष्मीमविरतमभिलषसि यदि रमयितुं
सुखं च यदीच्छसि,

---

1) अथ कलेति–दुर्ललितशब्दे लक्षणया सविलासम् । 2) युवा चासौ मयूरश्च । 3) जिनचरणेष्वत्र रतेति–रक्तम् । लये ध्याने । अपसरेति–प्रत्यागमनम् । हे पिकतरुण त्वमप्यपसरणं कुरु यतोऽस्य मुनेः औत्सुक्यं नहि जनयसि । नवदर्पदर्पितभ्रमरवृन्दमनोज्ञशब्दितशाखाललितवल्लीम् । 4) निष्प्रत्यूहमित्यत्र निरन्तरायम् । अभिलषती(सी)ति–आत्मनेपदमनित्यमिति न्यायात् परस्मैपदं वाञ्छसि ।

---

१ ललिने A. २ मानयि A. ३ लगौ च A. ४ उपसरणमुपरमय A. ५ तव मद० N. ६ मातनी० KHN. ७ नि.प्रत्यूहं AB.

स्यातुं [1]"न्यायोन्मीलद्बुद्धे लघुभिरपि सह बहुभिरिह कुरु मा
विरोधपदं तदा ।
विस्फूर्जत्फूत्कारं [1]क्रीडाकवलितसकलमृगकुलमजगरं
[2]"भुजंगमम्[2]मुन्मदं,
[3]"संघातं कृत्वा पश्यैता ग्लपितवपुषमनवधिरचितरुजा
अदन्ति पिपीलिकाः ॥ ३८५.१ ॥ ३०११ ॥

**एषैव नीपरतः पञ्चदशपञ्चदशलवृद्धा[3] क्रमेण**
**करभ ३५-पणव ४०-माला[4]ः ४२ ॥ ३८६ ॥**

एषैव पिपीलिका चतुर्भ्यो नगणेभ्यः परतः पञ्चभिर्दशभिः पञ्चदशभिश्च लघुभिर्वृद्धा[5] शेषगणेषु[6] तथैव स्थितेषु क्रमेण करभादयो[7] भवन्ति । तत्र[8] पञ्चभिर्वृद्धा पिपीलिकाकरभः । यथा–

[4]"नित्यं लक्ष्मच्छायाच्छन्नः
कलयतु कथमिव तव वदनरुचिममृतरुचिश्चिरं क्षयसंयुतः,
तुल्यं नाब्जं [5]"स्फूर्जद्धूली-
विधुरितजननयनयुगमतिमृदुकरचरणस्य निर्मलचारुणः ।
कण्ठस्येयं दासी[10] श्यामा
परभृतयुवतिरपि मधुपरिचयकलविरुतिर्निसर्गकलध्वनेः[6]",
भ्रूवल्लीभङ्गे छेकाया हरिणनयनमचतुरमविललिततनु
करभोरु नो" सदृशं दृशः ॥ ३८६.१ ॥ ३५११ ॥

दशभिर्वृद्धा[9] पिपीलिकापणवः । यथा–

[7]"रुन्दोऽमन्दः कुन्दच्छायः
शरदमलघनतुहिनविकचकुमुदवनहरहसितसितः[8]" शशाङ्ककरोज्ज्वलः,
तारः [9]"पारावारापारः
स्थलजलगगनतलसकलभुवनपथधवलनपरिचितः [10]"प्रसाधितदिङ्मुखः ।

1) न्यायेन उन्मीलन्ती विकसन्ती बुद्धिर्यस्येति तत्संबोधनम् । 2) भुजैर्यं गच्छन्ति ते सर्वेऽपि गोधासर्पाजगरादयो भुजंगमा भुजपरिसर्पा उच्यन्ते । 3 संघेति – एकीभूय । ग्लपितं वपुर्यस्य त कीटिकाः । 4) नित्यं लक्ष्मेत्यत्र कलङ्कच्छायाच्यासः । 5) रजः परागश्च । 6) स्वभावरम्यध्वनेः । 7) रुन्दोऽमन्देत्यत्र रुन्दो विपुलः । 8) तुहिन-विकचकुमुदवन-शंकराट्टहासवत् शुभ्रः । 9) पारावारवत् समुद्रवत्पारः । 10) मण्डितं दिङ्मुखं येन ।

१ पूत्कारं N. २ उन्मुदं B. ३ वृद्धा BFH ४ माला A. ५ वृद्धाः ACDEN. ६ शेषेषु गणेषु B. ७ करभादयोऽपि B. ८ तेऽत्र N. ९ वृद्धाः C. १० दासी B ११ ते N.

[1]लोकालोकच्छेदं गत्वा
[2]दृढकठिनविकटदिगवधितटघटनविवलनवलयितो[3] विशुद्धयशश्चयः,
प्रोत्तुङ्गः श्वेतप्राकारो
[4]ध्वनितगुणपणव तव जयति नृपवर नवललितवसतेर्जगत्रितयश्रियः ॥३८६.२॥४०।१

पञ्चदशभिर्वृद्धा पिपीलिकामाला । यथा –
उत्फुल्लाम्भोजास्यास्तस्याः
कुसुमशरसुभग तव विरहदव इह हि जयिनि समुपचरणविषये व्यधायि सखीजनैः,
[5]अङ्गे वासः कर्पूराम्भ-
स्तिमितशुचि तुहिनकिरणकरपरिभवचतुरधवलिम कुचतटयुगे सुमौक्तिकदाम च ।
[6]रम्भागुल्मं लीलागारं
मलयजरसकलितवसुधमभिनवविकचकुमुदवनदलसमुदयैश्च [7]तल्पककल्पना,
नव्या मौलौ मल्लीमाला
तदिदमखिलमपि दवहुतवहरुचि परिचितमहिम विरचयति मुहुः
प्रदाहमहाज्वरम् ॥३८६.३॥४५।१॥

## शेषजातिप्रकरणम् ।

### अथ दण्डकाः ।

यत् किञ्चिद् दृश्यते छन्दः षड्विंशत्यक्षराधिकम् ।
[8]शेषजात्यादिकं मुक्त्वा तत् सर्वं दण्डकं विदुः ॥ ३८६.४ ॥

तत्र –

**नारूक्ष चण्डवृष्टिः ॥ ३८७ ॥**

ना इति नगणद्वयं रूक्ष इति रगणसप्तकं च । समाहारो द्वन्द्वः । यथा –
[9]अभिनवतरदुर्मदोद्दामपाथोदमालाप्रतिच्छादिते सर्वतो व्योमनि,
स्फुटितकुटजकेतकीपांसुपुञ्जच्छटाच्छोटिताशेषदिगैन्द्रदिग्मारुते[10] ।
मुदितनिखिलनीलकण्ठैः कृते कूजकेकारवव्याकुले [11]ताण्डवाडम्बरे,
कथमिव चलितोऽसि भोः पान्थ हित्वा प्रियां [12]चण्डवृष्टिप्रपाताकुले वर्त्मनि ॥३८७.१॥
चण्डवृष्टिप्रपात इत्यन्ये ॥ ३८७.१ ॥

---

1) लोकालोकनाम्नो मानुषोत्तरस्य गिरेः पर्यन्तम् । 2) सबलः कठिनः कर्कशः विपुलः । 3) अवधेस्तटानि अवधितटानि दिशां, वलयाकार प्रासः । 4) ध्वनितो गुणा एव पटहो(पणवो) यस्येति । 5) अङ्गे, वास इत्यत्र वसनम् । तिमितेति – क्लिन्नम् । 6) कदलीगुल्मं केलीगृहम् । 7) शय्यारचनं संपादयन्ति । शेषजातिप्रकरणम् । 8) शेषजात्यादिकमिति – आदिशब्दाद् वक्ष्यमाणच्छन्दसां समुद्रादीनां ग्रहणम् । 9) अभिनवतरस्य पाथोदेति – मेघमाला । 10) इन्द्रो देवता अस्या ऐन्द्री दिक् कर्मधारयः तस्या वायौ । 11) नृत्याडम्बरे । 12) चण्डा प्रचण्डा या वृष्टिः तस्याः पतनेन व्याकुले ।

---

१ विचलनचल° B, विवलनचल° N. २ समुपचरण° N, रा° च° विषये P. ३ वसुधामभि° N. ४ दहि N. ५ पांसु ABC. ६ पुजच्छटा A, ७ प्रपात° DEP.

**"यथोत्तरमेकैकरवृद्धा अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥ ३८८ ॥**

चण्डवृष्टेरूर्ध्वमेकैकरगणवृद्धाः क्रमेणार्णादयो दण्डकाः । तत्र नगणाभ्यां परैरष्टमी रगणैरर्णः । यथा –

"अविरलगुरुशाखिनोऽरण्यभागान् समुत्तुङ्गशृङ्गावलीशालिनः
"सर्वभूमीभृतो,
विपुलतरतरंगसंसंगिनीः कूलिनीरुच्छ्रितानेकसौधान् पुर-
ग्रामदेशानपि ।
"स्थगयति तमसि प्रपन्ने सपत्नत्वमुन्मुक्तधैर्यस्य पाथो
निधेर्मङ्क्षु रज्यद्वपुः,
कुपित इव तदर्णसः प्रोद्ययौ तस्य संहारकारी समुद्यत्करो-
ऽयं निशावल्लभः ॥ ३८८.१ ॥

नवभिरर्णवः । यथा –

"प्रसृतनिविडमारुतान्दोलिताश्वत्थसंशीर्णपर्णौघविस्फार-
वातोलिकापूर्यमाणाम्बरे,
घनवनदवदह्यमानाखिलक्रूरशार्दूलपोतोद्भटोन्नाद-
संत्रस्तमातङ्गयूथाकुले ।
दिनकरकरतप्तकोलावलीपीयमानार्द्रवल्ले लसल्लोल-
कल्लोलवाचालमायन्महा-,
र्णवपयसि ननु प्रिय ग्रीष्मकालेऽधुना मा स्म गा मातय त्वं हि
पीनस्तनाश्लेषसौख्यानि मे ॥ ३८८.२ ॥

दशभिर्व्यालः । यथा –

"चिरवहदरघट्टसपूर्यमाणोच्छलत्सारिणीतोयधाराभिरामं सदैकान्त-
कान्तप्रसर्पल्लता-,

1 ) यथोत्तरमित्यत्र एकैक'राजिरा'गणवृद्धा इति । 2 ) अविरलेत्यत्र वृद्धवृक्षान् । 3 ) विभ्रपर्वतान् । 4 ) स्थगयतीति – आच्छादनं कुर्वति तमोगणे वैरभावं प्रपन्नेऽङ्गीकृते । उन्मुक्तेति – तावन्मया सर्वं व्याप्तं किं च अनेनापि सर्वं व्याप्यते तन्मामपि कदाचिद् व्याप्स्यतीति धैर्यहीनस्य । रज्यद्वपुर्यस्येति – उदयसमये चन्द्रो रक्तो वर्ण्यते इति कविसमयः । तदर्णस इति समुद्रजलात् निर्ययौ तमसो विनाशकारी । हस्ताः किरणाश्च करा उच्यन्ते । 5 ) प्रसृतनिविडेत्यत्र अश्वत्थः पिप्पलः । पोतो बालः । कोलः शूकरः । अरुणातं सरस्तडः । आश्लेषः सम्बन्धः । 6 ) चिरवहदरघट्टेत्यत्र अरहट इति प्रसिद्धं । गुल्मः वृक्षान्तरितम् ।

१ ससीर्ण A. २ वातोलिकी A ३ घनकलदव C; ४ समस्तानार्तं यूथा॰ A. ५ घट्टपूर्यमाणोच्छलच्छारणी B; घट्टसपूर्यमापोच्छ॰ N;

 

वहलिततरुगुल्मकेलीगृहं ये पुरोद्यानमुं[१]दामलीलाजुषः स्त्रीसखाश्चारु चेरु[२]श्चुलुक्येश्वर ।

[1]तृषितकरटियूथभल्लूकसंदोहं[३]कोलव्रजन्याकुलाश्यान[2]कल्लोलिनीवारि दुर्वारसूर्यद्युति,

[3]व्यतिकरविधुरीकृतव्यालसंरुध्यमानद्रुमच्छायमुद्दण्डकान्तारमीयुस्त्वदीयद्विपस्तेऽधुना ॥ ३८८.३ ॥

एकादशभिर्जीमूतः । यथा –

[4]जिनपतिपदपङ्कजस्पर्शपुण्यीकृताशेषशृङ्गः पुरस्तादयं तत्तदाश्चर्यसंपन्निदानं भुवो भूषणं,

प्रतिविपिननिकुञ्जकूं[४]जत्पिकीपञ्चमोच्चारसंवर्गितस्वर्गसीमन्तिनीवर्गगीतिप्रपञ्चाभिरामोऽन्वहम् ।

कुरुवकसहकारकारस्कराशोककजम्बूकदम्बेङ्गुदीवेणुकान्तारमाला[5]प्रतिच्छन्नमार्तण्डचण्डातपः,

प्रतितटविनिविष्टजीमूतसंदोहनिर्मुच्यमानामृतासारपूर्णोद्रहन्निर्झरः पश्य दिष्ट्योज्ज्वयन्तो गिरिः ॥ ३८८.४ ॥

द्वादशभिर्लीलाकरः । यथा –

[6]घनपरिमलसारकर्पूरपानीयतिम्यद्दुकूलं कुकूलश्रियं पद्मिनीपल्लवस्रस्तरैः खादिराङ्गारविस्फूर्जितं,

[7]तुहिनकिरणचन्द्रिका हन्त हालाहलत्वं नवं चन्दनं तप्तलोहोपमां वेणुवीणानिनादोऽपि कर्णज्वरत्वं दधत् ।

अयि तव विरहे यदस्या मृगाक्ष्या भवन्नामधेयाक्षरोच्चारमन्त्रैकरक्षाद्रुं[११]पः सांप्रतं सर्वमेवाभजद् व्यलयं[8],

तदेतिसुभग सान्द्रपीयूषलीलाकरैस्त्वैर्वचोभिः समाश्वासयैनां[1] चिरायान्यथा तु त्वमेवात्र [9]निःशूकचूडामणिः ॥ ३८८.५ ॥

1) तृषितकरटि(टी)[ति] – भल्लूक ऋक्षः । 2) आश्याना ईषत् शुष्का नदी । 3) व्यतिकरः संबन्धः । व्याकुलीकृतम् । 4) जिनपतिपदेत्यत्र पवित्रीकृताखिलशिखरः । संवर्गितस्वर्गकामिनी । अन्वहं निरन्तरम् । कारस्करो वृक्षः । इङ्गुदी गुडी । वेणुर्वंशः । 5) प्रतीत – आच्छादितः । जीमूत॰ मेघसमूहनिर्मुच्यमानजलवेगवद्दर्पः । 6) घनपरिमलेत्यत्र घनो बहलः प्रधानकर्पूरजलसिक्तपट्[टु]कूलम् । कुकूलेति – तुषानलशोभां दाहाधिकत्वम् । विस्फूर्जितं अनुकारम् । 7) चन्द्रज्योत्स्ना । विषत्वम् । 8) व्यलयं वैपरीत्यम् । 9) निर्दयशिरोमणिः ।

१ पुरोद्यमयानमुलीला॰ A. २ चेलुश्चु॰ A. ३ सदाह A. ४ पति dropped in N. ५ पुष्पस्त्वा N. ६ कुभर् A. ७ सवर्गगीति प्रप॰ O. ८ चन्द्रातपः A. ९ पूर्णोद्वाहन्निर्झरः A. १० अस्वर: P. ११ रक्षाद्युपः B; १२ तदस्मि N. १३ एनां P.

त्रयोदशभिरुद्दामः । यथा—

"[1]वलयितवरकन्धरं वल्गदुत्तुङ्गतेजस्विगन्धर्वराजीखुरक्षुण्णविश्वं-
भराक्षोदसंदोहविक्षेपणाद्दुर्दिनाडम्बरं"[2],
प्रथममपि निरीक्ष्य सप्रेमकान्तामुखाम्भोरुहालोकने स क्षणं कौतुकी
नष्टकामोऽपि यावद्भवत्युन्मनास्त्वद्विपक्षव्रजः ।
नृप तव सहसा जयश्रीविलासैकधामेभ्रमातङ्ग"[3]-संसर्धिनोऽभ्रंकषैर्विग्रहै-
र्भीषणाः क्षोभयन्तो जगद्गर्जितैरूर्जितैः,
स्रुतमदजलनिर्झरैर्ध्वस्तधूलीविताना: कृतान्ता इवोद्दामगन्धद्विपास्-
तावदाविर्भवन्तश्चिरान्मूर्च्छयामासुरेनं विभो ॥ ३८८.६ ॥

चतुर्दशभिः शङ्खः । यथा—

"[4]अमरपतिकरिभ्रमं बिभ्रतीभाः सममाः कलङ्कः कलाविभ्रमं धारय-
त्यत्रिनेत्रप्रसूतस्य कृष्णो वहत्यन्धकध्वंसकर्तुस्तुलां,
कुवलयवनमातनोति श्रियं पौण्डरीकीं कलिन्दात्मजा जह्नुकन्योज्ज्वलं
वारि धत्ते विधत्तेऽञ्जनाद्रिर्विलासं च कैलासपृथ्वीभृतः ।
कलयति लवणोदधिः क्षीरपाथोधिलीलायितं शेषशोभामशेषाह्वयः"[5] प्रामु-
वन्तीन्द्रनीलाश्च"[6] मुक्तामणीनां समासादयन्ति त्विषं,
विचकिलहरहासनीहारहारेन्दुशङ्खावदातैरमीभिः स्फुरद्भिर्महीपालचूडामणे
"[7]शासनैश्वर्यवज्रायुध त्वयशोराशिभिः ॥ ३८८.७ ॥

आदिशब्दात् पञ्चदशभिः समुद्रः षोडशभिर्भुजंग इत्येवमादयो यथेष्टकृतनामानो यावदेकोनसहस्रार्धरं पादस्तावद्भवन्ति ॥ ३८८.७ ॥

नाभ्यां रवद्यादयः प्रचितः ॥ ३८९ ॥

नगणद्वयात् परे यादयः सर्वे वर्णगणा यदा भवन्ति तदा प्रचितः । "[8]रवद् इत्य-

1) वलयितवरेत्यत्र वलयिता वलयाकारं प्रापिता कन्धरा यत्रेति क्रियाविशेषणम् । वलान्तो धावन्त-स्तेजस्विनो गन्धर्वा अश्वास्तेषाम् । 2) दुर्दिनमिव दुर्दिनं मेघजं तमस्तस्याडम्बरस्तम् । 3) अभ्रमातङ्ग ऐरावणः । अभ्रं आकाशं कषन्तीति अभ्रंकषाः । उच्चरुचा । विग्रहा(हैः) शरीरा(रैः) । ऊर्जितैर्दीप्तैः । कृतान्ताः यमा इव श्यामवर्णत्वात् । उद्दामेति—उत्कटमूर्च्छां प्रापयामासुः । 4) अमरपतीत्यत्र इन्द्रहस्तिभ्रान्तिम् । सर्वेऽपीभाः श्यामा अपि शुभ्रा जाताः । अत्रिनेत्रेति—चन्द्रो हि अत्रिऋषिनेत्रजात इति श्रुतिः । अन्धकेति—ईश्वरस्य । कलिन्देति—यमुना गङ्गोज्ज्वलम् । शेषेति-शुक्लः सः । 5) अखिलनागाः । 6) इन्द्रः मणिभेदः । 7) शासनं आज्ञा ऐश्वर्यं च ताभ्यां वज्रायुधस्तत्संबोधनम् । 8) रवदित्यतिदेशादिति—अत्र अन्यत्र विस्तरेण प्ररूपितस्य संक्षेपेण कथनमतिदेशः । कस्मिंश्चपि दण्डके रवद् यगणानां न्यासः भवतु, कस्मिंश्चपि भगणानां, कस्मिंश्चपि तगणानां इति । पुनः सप्तसु यगणेषु प्रचितः सप्तसु भगणेषु प्रचितः । तथा तगणादि-ष्वपि ज्ञेयम् । ततः परं सर्वेषां गणानां न्यासः । सदृशान्येवार्णार्णवादीनि इति ।

१ वलत्तुङ्ग N. २ तेजधि B. ३ रुहावलोकने A. ४ धामोऽभ्रमा० N. ५ स्रुत० A. श्रुत० CDN. ६ करिविभ्रमं A. ७ विभ्रती भो॰ N. ८ अशेषाह्वयः N. ९ शुभनामानो P. १० क्षरपादः N.

तिदेशात्सप्तभिर्येः प्रचितः । ततः परमेकैकयादिवृद्धा अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयोऽपि भवन्ति । यथा –

[1]विलसदुरुतरवारिप्रचण्डे महावाहिनीव्यूहविस्फारणव्यक्तशक्तौ,
प्रकटयति रुचिरखण्डकोदण्डदण्डं दिशत्युच्चकै [2]राजहंसप्रणाशम् ।
प्रशमयति निखिलं मेदिनीचक्रसंतापविस्फूर्जितं[3] न्यक्कृतार्कप्रतापे,
[4]प्रचितघनबलयुक्ते नभस्यायमाने चुलुक्येश्वरे को न धत्ते प्रमोदम् ॥ ३८९.१ ॥

एवमादिषु शेषगणेषूदाहार्यम् । एकैकगणवृद्ध्या च अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयोऽप्युदाहार्याः ।

नग्भ्यामष्टादिराः पन्नग-दम्भोलि-हेलावली-मालती-केलि-कङ्केल्लि-लीलाविलासादयः ॥ ३९० ॥

नगणाद्गुरोश्च परे अष्टादिसंख्या रगणा येषु ते यथासंख्यं पन्नगादयो दण्डका भवन्ति । तत्राष्टरगणः पन्नगः । यथा –

[5]अविकलध्यानसंतानधूमध्वजज्योतिराडम्बरप्लुष्टनिःशेषकर्मेन्धनो,
[6]विदलितोद्दमभूयःकपायश्रियायेप पायादपायात् स वः पार्श्वनाथो जिनः ।
कमठदैत्ये च गाढोपसर्गक्रियाकर्कशे तत्प्रतीकारवद्धप्रयत्ने भृशं,
प्रकटितासन्नभक्तौ तदा पन्नगेन्द्रे च यस्याभवन् दृष्टिपाताः कृपार्द्राः समाः ॥ ३९०.१ ॥

एवमेकैकरगणवृद्ध्यान्येऽपि षडुदाहार्याः ॥ ३९०.१ ॥

लोर्यथेष्टं राश्चण्डकालः ॥ ३९१ ॥

लघुपञ्चकात्परे यदृच्छया क्रियमाणा रगणाश्चण्डकालः । यथा –

[7]विविधमणिमेखलाश्रेणिविश्राणितश्रीणि हित्वा पुराण्याशु चान्तःपुराण्युच्चकैः,
करटितुरगादिसेनासहस्राणि च स्वीकृतच्छद्मकर्मन्दिवेपास्त्वदीयद्विपः ।
प्रतिदिशममी गिरीणां महाकन्दराः शाखिगुल्मानि कूलंकपाकूलरन्ध्राणि च,
स्फुरति तव चण्डकाले कराले कृपाणे सदा सश्रयन्ते महीपालचूडामणे ॥ ३९१.१ ॥

एवमेकैकरगणवृद्ध्याप्युदाहार्यम् ॥ ३९१.१ ॥

1) विलसदुरुतरवारीत्यत्र महावाहिनी सेना नदी च । कोदण्डं इन्द्रधनुः । 2) राज्ञां जीवाः पक्षे राजहंसाः तेषां गमनम् । 3) विस्फूर्जितं क्रीडितम् । 4) प्रचितेति – घनं प्रभूतं यद्बलं सैन्यं पक्षे मेघानां बलम् । नभस्येति – भाद्रपदमासवदाचरति । 5) अविकलध्यानेति – अविकलं असाधारणं ध्यानं तस्य संतानः परंपरा [तेन] एव अग्निज्वालाडम्बरेण दग्धः कर्मकाष्ठनिकरो येनेति सः । 6) विदलितेति – भूयो बहुः । 7) विविधमणीत्यत्र मेखला अद्रेर्मध्यभागाः विविधमणयश्च ता मेखलाश्च विविधमणिमेखलाः तासां श्रेणयः ताभ्यो विश्राणिता श्रीर्यैः । पक्षे मेखला रसना । यद्वा पुरपक्षे मेखला खङ्गबन्धो यस्य असवलंचि प्रसिद्धिः इति प्रत्यन्तरे ।

१ स्तुः F. २ तरोवारि A. ३ व्यक्त dropped in N. ४ दिशत्यु॰ N. ५ बलयुक्तो N. ६ स्तुः F. ७ वयस्या॰ N. ८ कर्मान्दिवे॰ ADN. ९ ABN. drop एवं; D adds अन्यद् before अप्यु॰.

याः सिंहविक्रान्तः ॥ ३९२ ॥

लोः परे यथेष्टं यगणा यत्र स सिंहविक्रान्तः । यथा—

तरुणतरणितेजःप्रतप्ता वराहा इवारण्यभागेषु मुस्ताक्षतिं पल्वलान्ते,
विदधति किल केचित्तथान्ये महाभूभृतां कन्दराः कौशिकौघा[1] इवाभिश्रयन्ते ।
विपिनगहनमध्ये पुनः केऽपि [2]शाखामृगक्रीडितं बिभ्रति [3]प्रत्यनीकक्षितीशाः,
प्रकटयति सदा सिंहविक्रान्तलीलामनूनां त्वयीमां धरित्रीश चौलुक्यचन्द्र ॥ ३९२.१

एवमेकैकयगणवृद्ध्याप्युदाहार्यम् ॥ ३९२.१ ॥

लूगिभ्यां मेघमाला ॥ ३९३ ॥

लघुपङ्क्तात् गुरुत्रयाच्च परे यथेष्टं यगणा यत्र प्रयुज्यन्ते स[1] मेघमाला नाम दण्डकः । यथा—

अविरलमदपाथोनिर्झर[2]प्लावितक्षोणिपीठा महाशैलशृङ्गायमाणाः,
कपिशरुचिलसद्दन्ताशनिद्योतरौद्रा महागर्जितत्रासिताशेषलोकाः ।
रिपुनरपतिमातंगाः क्षणादेव देव प्रणाशं ययुः [4]संयुगान्तर्युगान्ता-,
निल इव विपुलप्राणे महामेघमाला महीपालधुर्ये त्वयि [5]प्रोज्जिहाने ॥ ३९३.१ ॥

एवमेकैकयगणवृद्ध्यान्येऽप्युदाहार्याः ॥ ३९३.१ ॥

यथेष्टं रा मत्तमातंगः ॥ ३९४ ॥

स्वेच्छया यत्र रगणाः प्रयुज्यन्ते स मत्तमातंगः । पुनर्यथेष्टग्रहणं लूगिभ्यामित्येतस्य निवृत्त्यर्थम् । यथा—

[6]पुष्पचापस्य चापश्रियं बिभ्रती भङ्गुरभ्रूविलासैः स्मितस्मेरकस्तूरिका-,
केलिपत्रावलीभङ्गिविभ्राजिगण्डस्थलेनेन्दुबिम्बानुकारं सदा कुर्वती ।
चारुवक्रोक्तिगर्भैर्वचोभिर्विदग्धैरमन्दं च पीयूषनिष्यन्दमाविष्कृती,
मत्तमातंगलीलागतिः काञ्चनच्छेदगौरी मुदं कस्य नाविष्करोति प्रिया ॥ ३९४.१ ॥

एवमेकैकरगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९४.१ ॥

साः कुसुमास्तरणः ॥ ३९५ ॥

यथेष्टं सगणा यत्र प्रयुज्यन्ते स कुसुमास्तरणः । यथा—

1) तरुणतरणीत्यत्र कौशिकाश्चलसमूहा इव घूकश्रेणय इव । 2) शाखामृगेति—वानरः । 3) प्रत्यनीका वैरिणः । 4) अविरलेत्यत्र संयुगान्तरिति—संग्राममध्ये । यथा युगान्तानिले प्रोद्यते सति विपुलप्राणे महापराक्रमे महामेघमालाः प्रणाशं यान्ति । 5) प्रोज्जीति—देदीप्यमाने । 6) पुष्पचापेत्यत्र कन्दर्पस्य धनुःश्रियम् । भङ्गुरेति वक्रम् । हास्यविकस्वरम् । करतूरिपत्रवल्लीलक्ष्मस्थाने भङ्गिः रचना । चारु इति—गर्भे मध्ये । आविष्करोति—प्रकटीकरोति ।

१ सा ABCDN. २ निर्झराप्लावित P. ३ हलभ P. ४ निष्पन्द N. ५ कुसुमास्तरः B.

[1]सुभग त्वयि दूरमुपेयुषि सा न कदाचिदुपैति विलासगृहाभिमुखं,
विकचाब्जवने न ददाति दृशं शिशिरांशुरुचन्दनपङ्कमपाकुरुते ।
न च हृष्यति [2]चाटुकरीषु सखीष्वपि पक्वपलाण्डुनिभं वहते वदनं,
कुसुमास्तरणानि पिनष्टितरां परिमुह्यति शीतलशीतमयूखकरैः ॥ ३९५.१ ॥

एवमेकैकसगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९५.१ ॥

**याः सिंहविक्रीडः ॥ ३९६ ॥**

यत्र यथेष्टं यगणाः प्रयुज्यन्ते स सिंहविक्रीडः । यथा–

[3]कचित्पङ्कशङ्काभ्रमत्कोलदंष्ट्राग्रसमुल्लेखनिष्पिष्ट-
वेश्मान्तकाचावनीकं,
कचिन्नालिकेरीफलास्फालनव्यग्रशाखामृगश्रेणि-
पर्याकुलोद्यानभागम् ।
कचित्तप्तमज्जन्महासैरिभोद्दामशृङ्गाग्रघातोच्छलद्-
दीर्घिकावारिसान्द्रं,
कचित् सिंहविक्रीडफूत्कारघोरं चुलुक्येन्द्र जज्ञे पुरं
त्वद्रिपूणामिदानीम् ॥ ३९६.१ ॥

एवमेकैकयगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९६.१ ॥

**ल्गावनङ्गशेखरः ॥ ३९७ ॥**

यत्र यथेष्टं निरन्तरौ लघुगुरू प्रयुज्येते सोऽनङ्गशेखरः । यथा–

[4]विशालभाललोलघूर्णमानकज्जलोज्ज्वलालक-
द्विरेफमालिकोपशोभिते,
विबुद्धहावमुग्धचारुपक्ष्मलालसभ्रमत्सु-
तारदीर्घनेत्रपत्रसुन्दरे ।
अमन्दकुन्दकुड्मलाभकोमलोल्लसद्द्युतीद्ध-
शुद्धदन्तपङ्क्तिकेसरालये,

1) सुभग त्वयीत्यत्र उपेयुषीति–गतवति क्रीडागृहसंमुखम् । 2) चाटुकेति–प्रियवचनानि तानि । पलाण्डुर्लसनकन्दः । पिनष्टि चूर्णीकरोति । परीति–मूर्च्छां गच्छति चन्द्रकिरणैः । 3) क्वचिदित्यत्र कर्दमभ्रमात् । कोलः सूकरः । अन्तः(न्त)शब्दः स्वरूपे प्रान्ते चान्ते च । शाखामृगेति–वानराः । महासैरिभो वनमहिषः । विक्रीडनेन क्रीडया फूत्काराः । 4) विशालभालेत्यत्र उज्ज्वलाः दीप्तिमन्तः येऽलकास्त एव भ्रमराः । हावो मुखविकारः । अनङ्गशेखरोऽनङ्गपरवशः ।

१ वने N. २ शिशिरांशुरु N. शशिरांशुरु P; ३ प्रवालो॰ N; ४ विक्रीडि B. ५ लग (गौ) प्रयुज्येते A. ६ पूर्णमान॰ N.
११ छन्दो॰

प्रियामुखाम्बुजेऽधरं पिपाय मध्विवापिबन्ननारतं
भवेदनङ्गशेखरः ॥ ३९७.१ ॥
एवं लघुगुरुवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९७.१ ॥

ग्लावशोकपुष्पमञ्जरी ॥ ३९८ ॥

यत्र यथेष्टं निरन्तरौ गुरुलघू प्रयुज्येते सोऽशोकपुष्पमञ्जरीनामा दण्डकः। यथा—

अस्तमाश्रितस्तुपारभारपातदग्धसर्व-
पुष्पजातिसचयो हिमर्तुरद्यं,
सर्वतो वसन्तनामधेय एष जृम्भते प्रियः
सखा तवेह देव पुष्पचाप।
विष्टपत्रयीपराजयेच्छया गृहाण नूतनान्
[1]शिलीमुखानखण्डितैकवीर,
चारुचूतकोरकानशोकपुष्पमञ्जरीर्नवाः
स्मितानि केसराणि पाटलाश्च ॥ ३९८.१ ॥
एवं गुरुलघुवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९८.१ ॥

ता गौ कामबाणः ॥ ३९९ ॥

यत्र यथेष्टं तगणा अन्ते गुरुद्वयं च प्रयुज्यते स कामबाणः। यथा—
[2]त्वद्विप्रयोगे नवे बालिकाया मनोभूशरक्लेशशान्त्यै प्र-
यत्नात्सखीभिः समन्तात्,
पाथोजिनीपल्लवैः कल्पित चारु तल्प समासूत्रिता नूत-
नैर्हारयष्टिर्मृणालैः।
रम्भादलैः कोमलैर्निर्मितं तालवृन्तं कृतश्चान्दनेन
द्रवेणाङ्गरागः किलास्याः,
तीव्रव्यथा प्रत्युतैतद्वितन्वत्समग्र कठोराशयांशिश्रियत्
कामबाणत्वमुग्रम् ॥ ३९९.१ ॥
एवमेकैकतगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९९.१ ॥

भा गौ भुजङ्गविलासः ॥ ४०० ॥

यत्र यथेष्टं भगणाः प्रयुज्यन्तेऽन्ते च गुरुद्वयं स भुजंगविलासः। यथा—

1) अस्तमाश्रित इत्यत्र शिलीमुखान् बाणान्। रम्या मञ्जरीः। स्मितानि विकसितानि। 2) त्वद्वि-[प्र]योग इत्यत्र तव विरहे नवे प्रथमोद्भवे। कल्पित रचितम्। प्रयुत समुत्तम्। कठिनाशय।

१ अशोकमञ्जरी BO. २ रम्यां B ३ जृम्भति N. ४ यातिशयन् A, यातिविनात् N

[1]पीनघनोन्नतवृत्तविशालतरस्तनमण्डलगाढनिपीडन-
कण्टकिताङ्गः,
कोमलबाहुमृणाललतादृढवेष्टितकण्ठतटः परिचुम्बन्-
विभ्रमपात्रम् ।
वासगृहे वहलोच्छ्वसितागुरुधूमलतानिचिते शयने
मृदुनि [2]क्षणदायां,
यो दयितां रमयत्यतिसंभ्रममानजुषं स भुजंगविलास-
धुरामिह धत्ते ॥ ४००.१ ॥

एवमेकैकभगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ४००.१ ॥

**नाभ्यां पञ्चमात्रैरुत्कलिका ॥ ४०१ ॥**

द्वाभ्यां नगणाभ्यां परैर्यथेष्टं पञ्चमात्रैर्गणैरुत्कलिका नाम । यथा –

[3]सितबकुलशिरीषकङ्केल्लिककोलनव्यप्रसूनावलीपरिमलविलोल-
रोलम्ब-[4]रोलाकुलीकृतासिलचारुलीलावनो,
मृदुमलयसमीर-[5]शैलूषशिक्षाक्रमानुगुणविविधाङ्गहारप्रयोग-
प्रपञ्चप्रवल्गल्लतानर्तकीरम्यरङ्गावनिः ।
अभिनवसहकारकोरकास्वादमाद्यत्-[6]पिकयुवतिपञ्चमोच्चारमन्त्रास्त्र-
साधितविषममानिनीमानदुर्गः समन्तादयं,
कमिव सपदि [7]संततोत्कलिकमिह नो विधत्ते जनं [8]हेलया निर्जिता-
शेषलोकस्य देवस्य कामस्य निर्व्याजबन्धुर्मधुः ॥ ४०१.१ ॥

एवमेकैकपञ्चमात्रवृद्ध्यान्यदप्युदाहार्यम् ॥ ४०१.१ ॥

दण्डकप्रकरणम् ।

*

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ समवृत्तव्यावर्णनो नाम द्वितीयोऽध्यायः ॥ २ ॥

ग्रन्थाग्रं १०४३; उभयं ११६८ ।

---

1) पीनघनोन्नतेति – पीनाः पुष्टाः । घनाः कठिनाः । वृत्ता वर्तुलाः । 2) क्षणदायां रात्रौ । 3) सितबकुलस्य मधुके पुष्पम् । 4) रोलाः भ्रमराः । 5) शैलूषो भरतः । 6) पिकयुवतिः कोकिला । 7) संततोत्कलिकं सततहृदनमनम् । 8) हेलया क्रीडया । इति श्रीछन्दोनुशासनद्वितीयाध्यायपर्यायाः समाप्ताः ॥

---

१ कोमलबाहुमृ० N. २ भिन्न dropped in C. ३ वहलोच्छ्वसितागुरु N. ४ दयितां मनसोऽसंभ्रम० A. ५ प्रान्ते dropped in P. ६ रोलम्बकुलितचारुली० वने N. ७ न ABCD.

# अथ तृतीयोऽध्यायः ।

इदानीमर्धसमवृत्तव्यावर्णनार्थमुपक्रम्यते –

**ओजयुजोः ॥ १ ॥**

अधिकारोऽयमाविषमवृत्तेभ्य उपतिष्ठते । तत्रौजं विषमं; युक् समं लोकसिद्धम् ॥ १ ॥

तत्र –

**सिल्गा नभभ्रा हरिणप्लुता ॥ २ ॥**

पाद इति चानुवर्तते । ओजपादयोः सगणत्रयं लघुगुरू च । युक्पादयोः नभभरा यत्र वृत्ते सा हरिणप्लुता । यथा –

"नृप शैलशिलाशयनासनाः, विदितकन्दफलाहरणाः सदा ।
निवसन्ति वने भवतो द्विषस्, तरुनिकुञ्जगता हरिणप्लुताः ॥ २.१ ॥

**सिल्गा भिगगा उपचित्रम् ॥ ३ ॥**

ओजपादयोः सगणत्रयं लघुगुरू च । युजोर्भगणत्रयं गुरुद्वयं च । यथा –

"अयमत्र नृपः सचिवस्त्वसा-, वेष कुमार इतः प्रतिहारः ।
उपचित्रमिति त्वदरेर्गृहे, वक्ति मिथः किल पान्थसमूहः ॥ ३.१ ॥

**लोनं वेगवती ॥ ४ ॥**

उपचित्रमेव लघुना रहितं वेगवती । ओजे सिगौ युजि भिगगा इत्यर्थः । यथा –

"नृपते तव कार्मुकवंशान्,-निष्पतिता शितसायकमाला ।
क्षितिभृच्छिरसि प्लवमाना, वेगवती पत नूतनरेवा ॥ ४.१ ॥

"आपातलिकेयम् ॥ ४.१ ॥

**भिगगा नजज्या द्रुतमध्या ॥ ५ ॥**

ओजे भगणत्रयं गुरुद्वयं च । युजि नजजयाः । यथा –

"वीरजिनेन्द्र भवत्पदपद्मं, भ्रमर इव द्रुतमध्यगमद् यः ।
मुक्तिवधूपरिरम्भणसौख्यं, करतलगामि कृतं खलु तेन ॥ ५.१ ॥

उपचित्रा । आपातलिकापरान्तिकेयम् ॥ ५.१ ॥

---

अथ तृतीयोऽध्यायः सपर्यायो लिख्यते ।

1) नृप शैलशिलेत्यत्र आहरणं आहारः । हरिणवत् प्लुतं गमनं येषां ते । अथवा सुभटागमशङ्कया हरिणेऽपि दृष्टे नष्टाः प्लुताः (ता.) । 2) अयमत्रेत्यत्र प्रती(ति)हारो दौवारिकः । उपचित्रमिति – त्वद्वैरिनगरे चित्रसमीपं परस्परं निदर्शयन्ति । 3) नृपते तवेत्यत्र रेवापि वंशाद्विर्गच्छन्ति इति श्रुतिः । रेवा नु गिरेरधोभागे प्लवते इयं नु क्षितिभृतां राज्ञां [ शिरसि ] प्लवते ततो नूतनरेवा । 4) आपातलिकेयमिति – ओजे षण्मात्रा युज्यष्टौ भगणद्वयान्ताश्चेदापातलिका । 5) वीरजिनेन्द्रेत्यत्र अध्यगमद् मध्ये (अधि?) गच्छति । मुक्तिरामोपगूहनसौख्यम् । हस्तगामि ।

---

१ लोकतः सिद्ध P. २ विदित dropped in N. ३ रिपोस् N. ४ N. adds प्राच्यवृत्तिरियम् । ५ स्गौ च A. ६ ओजयोरुपान्त्यलघुना न्यूनम् । आपातलिकेयं P. ७ रेवा N. ८ मुक्तिवधूपरि० A. ९ इयं dropped in A.

तजगा मसजगगा भद्रविराट् ॥ ६ ॥

ओजे तजरगाः। युजि मसजगगाः। यथा–

"[1]पश्येद्गरावन् पदारविन्द-, द्वन्द्वं भक्तित एकदापि यस्ते।
विभ्रद्भुवनाधिपत्यमेकं, भद्रं भद्रविराड् भजेत सोऽपि ॥ ६.१ ॥

औपच्छन्दसकमिदम् ॥ ६.१ ॥

सजसा भरनगगाः केतुमती ॥ ७ ॥

ओजे सजसगाः। युजि भरनगगाः। यथा–

"[2]प्रसरद्रजःस्थगितसूर्या, केतुमतीमुदीक्ष्य तव सेनाम्।
वसुधापते दिवमिवात्म-, नाशमशङ्कत त्वदरिवर्गः ॥ ७.१ ॥

ताजगगा जतजगगा आख्यानकी ॥ ८ ॥

ओजे ततजगगाः। युजि जतजगगाः। यथा–

"[3]त्वद्वैरिभूपैरियमागतोच्चैर-, मरालनादैर्मुखरा शरच्छ्रीः।
आख्यानकीव त्वदनीकयात्रो-, त्सवस्य सद्यश्चकितैरुदैक्षि ॥ ८.१ ॥

आख्यानकी वार्त्ताहारिका ॥ ८.१ ॥

व्यत्यये विपरीतादिः ॥ ९ ॥

व्यत्यये इति ओजे जतजगगाः। युजि ततजगगाः। विपरीतादिर्विपरीताख्यानकीत्यर्थः। यथा–

"[4]अमंस्त ते दुर्नयचेष्टितानाम्, आख्यानकीं या विपरीतवृत्तिम् ॥
पुरः सखीनां मुखता विपक्ष-, नाम त्वया संमति लज्जिता सा ॥ ९.१ ॥

"[5]एतयोश्च उपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमत्र पाठः ॥ ९.१ ॥

रजरा जरजगा पदमती ॥ १० ॥

ओजे रजरजा। युजि जरजरगाः। यथा–

---

1) पश्येद्भगवन्नित्यत्र भद्रं कल्याणं भजेत। भद्रे स्वादिने विराजते भद्रविराट्। 2) प्रसरद्रज इत्यत्र आच्छादितरविम्। केतवो ध्वजा महाश्च। आकाशमिव। यदा गत(ग)ने केतुरुदयति तदा जीवानां नाशो भवतीति लोकाः। [दिवशब्देन दिनं भासते। यतो यथा दिनस्यात्मनाशो जातः तथात्मनोऽपि B. P.]।
3) त्वद्वैरीत्यत्र हंसध्वनिभिः। आख्यानं करोति कारयति वा गौरादित्वात् ङीः। उदैक्षीति–दृष्टा।
4) अमंस्त ते इत्यत्र या कामिनी तव दुर्नयचेष्टितानां कथयित्री अमन्यत पराङ्मुखवृत्तिं सा मांसतं विपक्षायाः सपत्न्याः नाम सखीनां पुरतो मुखता मौनं धत्ते इति। 5) एतयोरित्यत्र इन्द्रवज्रोपेन्द्रवज्र.(ज)-[योरुपजाति]वर्गेऽपि विशेषावबोधार्थं उक्ता उदाहरणद्वयी।

---

१ औपच्छन्दसिकमिदं ABN. २ आख्यानिकी H. ३ आख्यानकी-इति: A. ४ मरालनादा BN.

[1]"यन्यसैरिभा भवद्विपक्षधाम्नि, निरन्तरेन्द्रनीलबद्धभूमिभागे ।
न्यग्मुखं प्रकुर्वते मुधा वितर्क्य, विनीलविस्फुरद् यवान्वितां धरित्रीम् ॥ १०.१ ॥

यवान्वितां यवमतीमित्यर्थः । छन्दोवशाच्च यवान्वितामित्युक्तम् ॥ १०.१ ॥

व्यत्यये षट्पदावली ॥ ११ ॥

व्यत्यये इत्योजे जरजरगाः । युजि रजरजाः । यथा–

[2]"नवोदयं चिरादुपेयिवांसमर्कं, स्वागतानि पृच्छतीव संमदेन ।
सरोजिनी विकस्वरा निशावसाने, षट्पदावलीकृतस्वनच्छलेन ॥ ११.१ ॥

नभभ्रा नभिरा मकरावली ॥ १२ ॥

ओजे नभभराः । युजि नो भत्रयं रश्च । यथा–

[3]"मकरकेतुभटस्य विराजते, वरतनुर्ध्वजयष्टिरिव प्रगुणीकृता ।
मृदुकपोलतले दधती नवां, मृगमदस्तवकैर्लिखितां मकरावलीम् ॥ १२.१ ॥

मसागाः सभासाः करिणी ॥ १३ ॥

ओजे मः सगणद्वयं गुरुश्च । युजि सो भगणद्वयं सश्च । यथा–

[4]"चन्द्रो मत्तकरीन्द्र इवायं, दलितोद्दामतमस्तरुगहनः ।
क्रीडत्यम्बरपल्वलमध्ये, स्फुटताराकरिणीभिरनुसृतः[6] ॥ १३.१ ॥

साज्गाः सभ्रल्गाः प्रबोधिता ॥ १४ ॥

ओजे सद्वयं जगौ च । युजि सभरलगाः । यथा–

[5]"तरुमूलगृहाः क्षपाक्षये, नृप निद्रां जहति द्विपस्तव ।
विटपान्तकुलायनिष्पतत्–, पतगश्रेणिरवैः प्रबोधिताः ॥ १४.१ ॥

नारल्गा नजजा अपरवक्त्रम् ॥ १५ ॥

ओजे नगणद्वयं रलगाश्च । युजि नजजराः । यथा–

[6]"नृपवर भवदीयवर्णनं, निखिलमुखे रचयन् पुरातनैः ।
अधिकमपरवक्त्रमीहते, श्रुतिपठनाय चतुर्मुखोऽधुना ॥ १५.१ ॥

एतौ वैतालीयभेदौ ॥ १५.१ ॥

1) यन्यसैरिभा इत्यत्र यन्महिषाः त्वद्वैरिगृहे । निर्यग् । आशङ्क्य । नूतनयवयुक्तां वसुधाम् । 2) नवोदयमित्यत्र उपेयिवांसं आगतम् । स्वागतेति–शोभनान्यागतानि स्वागतानि कुशलागमनानि । निशेति–रात्रिप्रान्ते । छलेन कपटेन । 3) मकरेत्यत्र कन्दर्पसुभटस्य । कामिनी । ध्वजः पताका । मकरेति–मकरस्य रूपाकृतिपत्रलेखाम् । ध्वजेऽपि मकररूपाणि भवन्ति । 4) चन्द्रो मत्तेत्यत्र उद्दामो दीप्तः । अनुसृतः आश्रितः । 5) तरुमूलेत्यत्र शाखाप्रान्तस्थालकनिर्गच्छत्पक्षिराजिशब्दैः । 6) नृपवरेत्यत्र पुरातनैः जीर्णैः । पद्मं वाञ्छति ब्रह्मा ।

१ यववतीं LNP. २ व्यत्यये इति dropped in P. ३ मकरावली G. ४ सद्वयं गुरुश्च A. ५ भद्वयं A. ६ अनुसृताः A. ७ सभरलगाः N; सभ्रगल्गा. A. ८ प्रबोधिता B. ९ नद्वयं A.

**गान्तं पुष्पिताग्रा ॥ १६ ॥**

अपरवक्त्रमेव ओजयुजोर्गान्तं पुष्पिताग्रा। यथा–

[1]स्मर इव शयितः कयाप्यशोके, पदहननेन जगज्जयाय नुन्नः।

सपदि यदिपवोऽस्य पुष्पिताग्र-, प्रसवमिषात् प्रगुणाः परिस्फुरन्ति ॥ १६.१ ॥

**साङ्गगाः स्भर्या मालभारिणी ॥ १७ ॥**

ओजे ससजगगाः। समे सभरयाः। यथा–

[2]इह वासकसज्जिकाविलासं, वहते शारदशर्वरी वरेण्यम्।

अवतंसितकैरवोज्ज्वलश्रीः, [3]विकसत्तारकमालभारिणीयम् ॥ १७.१ ॥

नितम्बिनीत्यन्यः। औपच्छन्दसकभेदावेतौ ॥ १७.१ ॥

**भातल्गा न्जन्सगा विलसितलीला ॥ १८ ॥**

ओजे भद्वयं तलगाश्च। युजि नजनसगाः। यथा–

[4]वक्रनिरीक्षणभङ्गिप्रणयी, भ्रमति धनुर्विलसदिपुरनङ्गः।

भृत्य इवाशु यदाज्ञां विदधद्, रमयति सा नवविलसितलीला ॥ १८.१ ॥

**भ्रन्जनल्गा शैर् न्जभ्जन्साष्टैर्मानिनी ॥ १९ ॥**

ओजे भरनजनलगाः। शैरिति दशभिर्यतिः। युजि नजभजनसाः।
टैरित्येकादशभिर्यतिः। यथा–

[5]मानभृतामिदं तृणमिव जीवितमिति न किं,
कलयसि शास्सि रोहिणि न यत्त्वमपि निजपतिम्।

दक्षसुते कलङ्कय पितृगोत्रमलमधुना,
विरमथ मानिनीजनवधानुमतिघटनया ॥ १९.१ ॥

**रो ज्रल्गाः कामिनी ॥ २० ॥**

ओजे रगणः। युजि जरलगाः। यथा–

[6]निर्वृतिं,
विधेहि हस्तगामिनीम्।

---

1) स्मर इवेत्यत्र नुन्नः प्रेरितो जागरितश्च। यस्मात् कामस्य सज्जीकृताः। 2) इह वासकेत्यत्र या सङ्केतं सविलासं ददाति सा वासकसज्जिका। या स्त्री भर्तरि समागते स्वं मण्डयति सा वा इति प्रत्यन्तरे। 3) विकसदिति–माला श्रेणिः पुष्पादिमयी च। 'मालेषीकेष्टकस्याने भारितूलचितं' (सि० कौ० २.४.१०२) इति ह्रस्वः। 4) वक्रनिरीक्षणेत्यत्र कटाक्षभङ्गीषु कृताश्रयः स्फुरति। धनुषि विलसन्त इषवो बाणा यस्येति। सा स्त्री रमयति लोकं इति शेषः। 5) मानभृतामिदमित्यत्र कलयसि इति–किं न जानासि। शास्सि शिक्षयसि न स्वभर्तारम्। मानिनीति–चन्द्रो हि विरहिणीमानिनीजनानां दाहकरणादिति स्वं निजपतेर्मानिनीजनवधानुमतिं ददासीति भावः। 6) निर्वृतिं विधेहि इत्यत्र करगताम्। जहि त्यज।

१ कयाथ शोके N. २ प्यपदहनेन N. ३ इयं dropped in A. ४ औपच्छन्दसिक० BN. ५ वक्रनि० ADEN. ६ भ्रनजनल्गाः B; ७ नजभ्जनसाः A; न्जभ्जनगाः CD; न्जभजनगाः N; नजभ्जन्साः P. ८ मानिनीः N. ९ शासि A; शास्ति B; शसि D; शासित N. १० न यत्त्वमपि repeated in A.

सर्वथा,

जहीहि हन्त कामिनीम् ॥ २०.१ ॥

**रो ज्रजाः शिखी ॥ २१ ॥**

ओजे रगणः । युजि जरजराः । यथा –

[1]योषितो,

वियोगदुःखखिद्यमान[1]मानसाः ।

दन्दहत्[2],

कटुस्वनैर्मयूर निश्चितं शिखी ॥ २१.१ ॥

**रो ज्रजौ[3] ज्गौ नितम्बिनी ॥ २२ ॥**

ओजे रगणः । युजि जरजरजगाः । यथा –

[2]सर्वथा,

विरिञ्चि[4]शंकरामराधिराजकेशवप्रियः ।

भेजिरे,

यदुत्सवं चिराय तत्र कारणं नितम्बिनी ॥ २२.१ ॥

**रस्त्रिर्जौ ल्गौ वारुणी ॥ २३ ॥**

ओजे रगणः[5] । युजि त्रीन् वारान् जौ । जरजरजरलगाः । यथा –

[3]उत्तमं,

घनाविनश्वरप्रमोदकारणं छलिन् यदीहसे[6] सुखम् ।

निर्मलं,

तदा शमामृतं पिबानिशं सुदारुणं विमुञ्च [4]वारुणीम् ॥ २३.१ ॥

**रश्चतुर्जौ वतंसिनी ॥ २४ ॥**

ओजे रगणः[7] । युजि चतुरो वारान् जौ । जरजरजरजराः । यथा –

शोभते,

धनुर्लतेव पुष्पधन्वनः शिरीषकोमलाङ्गिका सरोजलोचना ।

बालिका,

जपासहोदराधरा [5]मधूककान्तिरत्यशोकपल्लवावतंसिनी ॥ २४.१ ॥

---

1) योषित इत्यत्र हे मयूर त्वं शिखी असि निश्चयेन । शिखी मयूरो वह्निश्च । 2) सर्वथेत्यत्र उन्मार्गे चिरकालम् । 3) उत्तममित्यत्र अविनाशिहर्षहेतुम् 4) मदिराम् । 5) शोभत इत्यत्र मधूककान्तिरतीव–गौराङ्गीत्यर्थः । कंकेलिकिसलयशेखरवती ।

---

१ मान dropped in c. २ निहन्ति ɴ. ३ रो ज्रज्गाः ʙᴘ. ज्गौ dropped in. ᴏ. ४ विरिञ्च ɴ; विरिंचि ᴘ. ५ रः ᴀ. ६ सने ᴀ. ७ रः ᴀ. ८ सने ᴀ.

**कामिन्याद्या व्यत्यये वानरीशिखण्डिसारस्यपराहंस्यः ॥ २५ ॥**

कामिनी - शिखि - नितम्बिनी - वारुणी - वतंसिन्यः ओजयुक्पादयोर्व्यत्यये यथासंख्यं वानरी - शिखण्डि - सारसपरा - हंसीसंज्ञाः । कामिनीव्यत्यये वानरी । यथा —

"[1]नियम्य गाढसंततैः,
सद्गुणैः ।
सखे स्थिरां कुरु श्रियं,
वानरीम् ॥ २५.१ ॥

शिखिव्यत्यये शिखण्डी । यथा —

तपात्यये घनध्वनन्मृदङ्गके,
कुर्वते ।
अखण्डपड्जगीतयः शिखण्डिनस्,
ताण्डवम् ॥ २५.२ ॥

नितम्बिनीव्यत्यये सारसी । यथा —

"[2]त्वमब्जलोचने शरत् त्वदीयमेतदाननं,
चन्द्रमाः ।
झणज्झणायितस्वनाऽपि मेखला विभाति ते,
सारसी ॥ २५.३ ॥

वारुणीव्यत्यये अपरा । यथा —

"[3]जिन त्वदीयशासनादृते विवेकदीपको भवत्ययं,
न कश्चित् ।
तमश्छिदाक्षमं हि तेज एकमूर्जितं प्रसूत इन्द्रदिक्,
नापरा ॥ २५.४ ॥

वतंसिनीव्यत्यये हंसी । यथा —

"[4]त्वदारवे कृतस्पृहासु विस्मृतस्वनिस्वना बकी जगाम साधुना,
मूकताम् ।
सरो विकस्वराम्बुजाकरं प्रियप्रणीतचाटुका वदेहि सोत्सरं,
हंसिके ॥ २५.५ ॥

1) नियम्येत्यत्र नियम्य । सद्गुणैरिति–गुणा रज्जवश्च । वानरीम् वानरीं तां चपलां इत्यर्थः । 2) त्वमब्जेत्यत्र सारसीव सारसी पक्षे मधुरस्वरया । 3) जिन त्वदीयेति अत्र जने जिना । इन्द्रदिक् पूर्वा । 4) त्वदारवे इत्यत्र त्वदाह्वाने । मूकत्वम् ।

१ कमेन B. २ अखण्डपाण्ड B; अखण्डपड्क्ष D. ३ त्वमब्जलोच repeated in A. ४ शरद् N. ५ झणज्झणायि AF; झनझनायित BN. ६ ते dropped in A. ७ रदाद्य is repeated in A.

**पौ मल्लिका ॥ ८० ॥**

साधिकाक्षरा आदौ पौ चेन्मल्लिका । यथा–

"उब्भिज्जउ मायंदमंजरी पाडला दलउ चिरं,
सा पायडविआससिरी अ णोमालिआ वि णिब्भरं ।
विअसउ वसंतंमि फुडं मणहरा असोअवल्लिआ,
एक्क चिअ भसलस्स माणसं हरइ हंत मल्लिआ ॥ ८०.१ ॥

**सा तुर्यपा दीपिका ॥ ८१ ॥**

सा मल्लिका चतुर्थः पश्चेद्दीपिका । यथा–

"मत्तवारिहरपंतिरुद्धहरिणंकमऊहसोहए,
रोअसीकंदरूसंतघोरअंधयारवूहए ।
रमणवासभवणाहिसारिआण रुइरविज्जुलेहिआ,
कामिणीण अवलोअकारिणी हवइ इह करदीविआ ॥ ८१.१ ॥

**ताभिर्लक्ष्मिका ॥ ८२ ॥**

ताभिरधिकाक्षरादिभिः संकीर्णा लक्ष्मिका । यथा–

"केसरकुरवयमायंदतिलयअसोअकोरया,
विरहाणलडज्झंतनिअंविणिजीविअचोरया ।
एदे किर दुप्पिच्छा विलसंति मणोहवसरा,
जेसुं ते कह णिग्गमिअव्वा महुलच्छियासरा ॥ ८२.१ ॥

अत्राद्यपादत्रये अधिकाक्षरा चतुर्थपादे शुभ्रिका । एवमन्याभिरप्युदाहार्या केचित्सर्वैरपि खञ्जकभेदैः संकीर्णतायां लक्ष्मिकामिच्छन्ति ॥ ८२.१ ॥

**चतुष्पञ्चषट्सप्ताष्टनवपा मदनावतार-मधुकरी-नवकोकिला-कामलीला-सुतारा-वसन्तोत्सवाः ॥ ८३ ॥**

चतुरादिपाः क्रमेण मदनावतारादयो भवन्ति । तत्र चतुर्भिः पञ्चमात्रैर्मदनावतारः ।

---

1) उब्भिज्जउत्ति–माकन्दमञ्जरी उद्भिनत्तु । पाटला दलउत्ति–विकसिता भवतु । प्रकटा विकासश्रीर्यस्याः सापि नवमालिका लताभिद् । निर्भरं यथा स्यात्तथा विकसतु । क । वसन्ते । परं केवलं एकैव भ्रमरस्य मल्लिका मानसं हरति नान्येति भावः । 2) मत्तवारिहरेत्यत्र मत्ता उत्कव्या वारिगृहं(घर ?)पङ्क्तिभिः रुद्धा हरिणाङ्कमयूखालैः शोभिते [ मयूखानां शोभा यत्र तस्मिन् ed. ] रोदसी दिवस्पृथिवीरूपकन्दरात् उच्छलत्(द्)घोरान्धकारव्यूहे सति रुचिरविद्युल्लेखिका रमणवासभवनाभिसारिकाणां कामिनीनां अवलोककारिणी करदीपिकेव इह भवति । 3) केसरकुरवयेत्यत्र । सखीं प्रति सखी प्राह । केसरकुरवकचूतनिलकाशोकानां कोरकाः पुष्पमुकुला येषु । विरहानलेन दंदह्यमाननितम्बिनीजीवितलस्करा हे सखि एते दुःप्रेक्ष्या मनोभवशरा विलसन्ति येषु । ते मधुमासस्य चैत्रस्य लक्ष्मीशरेषु ते च ते यामराः कथं गमयितव्याः । प्रियं विनेत्यर्थः ।

---

१ उब्भिङ्भिज्जउ K. २ मंजरीसोत्ता A. ३ दलओ SS. ४ पयड P; पायडि॰ B. ५ य A. ६ इय चिअ A. ७ मयूह A. ८ कंदरुच्छले SS; कंदरुच्छलंत K. ९ रुयिर A. १० कोरया A. ११ दप्पेक्खा AB. १२ महमास॰ B.

यथा—

[1]गिज्जंति गीईओ पिज्जंति मइराओ,
नचंति वेसाओ परिल्हसिअकेसाओ ।
एवमन्नोन्नपरिरंभणासारए,
कीलंति रामाओ मयणावयारए ॥ ८३.१ ॥

पञ्चभिर्मधुकरी । यथा—

[2]चरणेण वि नवफुडिअकुडयमपरिघट्टयंतिआ,
पक्खवाएण वि विहसिअकेअयमच्छिवंतिआ ।
उअह झत्ति एसा निम्मलयरगुणाणुरंजिरी,
अहिसरइ विअसंतजाइकुसुमं चेअ महुअरी ॥ ८३.२ ॥

षड्भिर्नवकोकिला । यथा—

[3]नवकोइलरवाउलमंजरिअमायंदतरुकंतारए,
सच्छंदमल्लिआमयरंदरसमत्तघोलंतछप्पए ।
जिंभंतमलयद्दिसमीरणलोलनोमालिआवल्लिए,
संभरइ पंथिओ पिअयमं ओसहिं हिअयए सल्लिए ॥ ८३.३ ॥

सप्तभिः कामलीला । यथा—

[4]मत्तपिअमाहवीपंचमोग्गारगुंजंतचूअद्दुमत्तंबओ,
मिउमलयमारुउद्धूअवल्लिप्पसूणग्गघोलंतरोलंबओ ।
चारुकंकेल्लिसाहंतदोलासमंदोलणासत्तनारीअणो,
कामलीलासहो संपयं विलसए एत्थ एसो वसंतक्खणो ॥ ८३.४ ॥

1) गिज्जंति गीईओ इत्यत्र गीयन्ते गीतयः पीयते मदिरा जनैः। परिल्हसितकेशाः स्खलत्केशाः वेश्याः नृत्यन्ति नृत्यं कुर्वन्ति। तथा अन्योन्यं परिरम्भणं आलिङ्गनं यासां ता रामाः क्रीडन्ति। क। शारदे शरत्काले। कीदृशे। मदनावतारके। 2) चरणेण वि इत्यत्र। हे मित्र त्वं पश्य इयं सा मधुकरी अभिसरति। किं कुर्वन्ती। अपरिघट्टयन्ती। कम्। नवस्फुटितकुटजम्। केन। पादेनापि। पुनः किं कुर्वन्ती। अच्छिवंतीएचि—अस्पृशन्ती। कम्। विकसितकेतकम्। केन। पक्षपातेनापि। झत्ति शीघ्रम्। कीदृशी। निर्मलगुणेषु अनुरज्यते इति निर्मलगुणानुरञ्जिनी एवंविधा सती विकसितजातिकुसुमं प्रतीत्यर्थः। 3) नवकोइलरवेत्यत्र नूतनश्चासौ कोकिलरवाकुलश्चासौ माञ्जरितश्चासौ माकन्दवरताम्रवृक्षस्तस्य कान्तारे वने। पुनः कथंभूते। स्वच्छन्दमल्लिका-मकरन्दरसेन मत्ता उन्मत्ता घोलन्तः षट्पदा यत्र। जिंभंतो देश्यो लोले। स चासौ मलयाद्रिसमीरणो वायुस्तेन लोला नवमालिकावल्लिर्यत्र। एवंविधे वने पथिकः दयितां प्रियतमां स्मरति। क। हृदये। शल्यिते ओषधिं स्मरति तथेति भावः। 4) मत्तपिअमाहवीत्यत्र सांप्रतं अत्र कामलीलासखः एष वसन्तक्षणो विलसति प्रवर्तते। मत्ता चासौ प्रियमाधवी कोकिला तस्याः पञ्चमोद्गारेण गुञ्जन् चूतद्रुमस्तम्बो यत्र सः। मृदुमलय-मारुतोद्धूतवल्लीप्रसूनाग्रे घोलन् भ्रमरस्तम्बो यत्र सः। चारुकङ्केल्लिशाखान्तेषु या दोलास्तासामसमं यदान्दोलनं तत्रासक्तो नारीजनो यत्र स तथा।

१ केचित्तु सर्वे॰ P. २ केअइम P ३ अच्छिविंतिआ A. ४ निम्मलगुणाणु K; निम्मलयरगु॰ A. ५ चिअ ACDN; चेव P. ६ रसाउल A. ७ जंभंत K. ८ हियए P. ९ पंचमुग्गार E. १० माहओद्धुअ A; माओउद्धुअ N. ११ णामत्त D. १२ नारीजणो A, १३ एत्तोरयए सउ॰ A.

अष्टाभिः सुतारा । यथा —

[1]पिअयम कहं जासि एआइणिं मं चइऊण देसंतरं पेच्छ निल्लज्ज,
सुरहिमासो पयट्टो असेसाणं जणाणं विलासेकदिक्खागुरू अज्ज ।
एस सुविसट्टकंदोट्टकंकेल्लिमायंदघोलंतरोलंवगीइस्सणो,
जं सुतारो धणुद्दंडटंकारओ इह निसामिज्जए सुहडपंचेसुणो ॥ ८३.५ ॥

नवभिर्वसन्तोत्सवः । यथा —

[2]फुल्लिआणेअकंकेल्लिमहुपाणमत्तालिझंकारकलगीइगिज्जंतकुसमाउहो,
मायंदनवमंजरीकसायकंठकलयंठीकोलाहलाउलिज्जंततरुसमूहो ।
पिअयमपरिरंभणचुंबणाइप्पसंगसंगलिअरसनीसंदुद्धुसिअरोमकूवओ,
हलहलिअतरुणिअणहिअयओ पवंचिअपंचमो विलसिओ वणेसु वसंतयऊसओ ॥ ८३.६ ॥

## खञ्जकप्रकरणम् ।

*

### खञ्जकं दीर्घाकृतं शीर्षकम् ॥ ८४ ॥

खञ्जकान्यपि दीर्घीकृतानि शीर्षकसंज्ञानि ॥ ८४ ॥

शीर्षकविशेषानाह —

### गीत्यन्तावबलम्बकौ द्विपदीखण्डम् ॥ ८५ ॥

[3]अवलम्बकद्वयमन्ते गीतिश्चेत्तदा द्विपदीखण्डम् । यथा रत्नावल्याम् —

[4]कुसुमाउहपिअदूअयं,    मउलावंतो चूअयं ।
सिढिलिअमाणग्गहणओ,    वाअइ दाहिणपवणओ ॥

1) पिययम कहमित्यत्र । हे प्रियतम इदानीं मां त्यक्त्वा क यास्यसि हे निर्लज्ज प्रेक्षस्व यस्मान्मधुमासः प्रवृत्तः अशेषाणां जनानां विलासाय एकोऽद्वितीयो दीक्षागुरुः । किं च अर्जति – अद्य । यस्मादेषः सुविकसितः । कन्दोट्टत्ति – देश्यः कमलवाची । विकसितकमलकङ्केल्लिमाकन्देषु घोलन् भ्रमराणां गीतिध्वनिः श्रूयते । सुतारो दीर्घः । इत्यत्रेक्षणे । सुभटपञ्चेषोर्धनुर्दण्डटङ्कारश्च (क ?) । इवा(वो)त्राध्याहार्यः । 2) फुल्लिआणेयकंकेल्लीत्यत्र वनेषु वसन्तोत्सवः प्रविलसितः । कीदृशः । पुष्पितानेककङ्केल्लिमधुपानेन मत्तभ्रमरझङ्कारगीतिभिर्गीयमानकुसुमायुधो यत्र माकन्दनूतनमञ्जरीभिः कषायितः कण्ठो यासां ताः कलकण्ठ्यः तासां कोलाहलैः आकुलीक्रियमाणः तरुसमूहो यत्र । तथा प्रियतमानां पुंस्त्रीणां परिरम्भणचुम्बनादिप्रसङ्गात् सगलितरसः प्रस्वेदलक्षणः तस्य निस्यन्दः सर्वतः प्रसरणं तेनोद्धूषिताः सिक्ता रोमकूपा यत्र सः । हलहलिअत्ति – व्याकुलतरुणीजनो यत्र सः । प्रपञ्चितः पञ्चमः स्वरो यत्र सः । 3) अवलम्बकद्वयमित्यत्र द्वयोऽपि खण्डोरखण्डखण्डिताभेदाः प्रत्येकमवलम्बकसंज्ञाः । 4) कुसुमाउहपियदूययमित्यत्र कुसुमायुधप्रियदूतकं मुकुलयन् चूतकं सहकारम् । शिथिलितं मानग्रहणं यस्मात् । दक्षिणपवनो वाति विरहितवधूकाशीतकः । आपीडकः पुष्पमुकुटः । ईप्सितप्रियतममेलकः सबन्धनस्य, प्रतीक्षमाणमनाः दुर्जनमार्यैः काम्यन्ति गेहे प्रावेशान । इतः दक्षिणपवनागमनानन्तरं मधुमासे वसन्तः जनस्य हृदयानि मृदूनि करोति यथा द्विष्यन्ति कामा दृप्यावस्थैः । कैः । कुसुमबाणैः ।

१ केको ss. २ इदमाने repeated in D. ३ आणेम A. ४ तरुणीअन N. ५ हिअओ AB; हिअअओ F. ६ इदं dropped in A.

विअलिअवउलामेलओ, इच्छिअपिअयममेलओ ।
पडियालणअसमत्थओ, तम्मइ जुअईसत्थओ ॥
इअ पढमं महुमासओ जणस्स हिअयाइं कुणइ मउआइं ।
पच्छा विंधइ कामओ लद्धावसरेहिं कुसुमबाणेहिं ॥ ८५.१ ॥

**द्विपद्यन्ते गीतिर्द्विभङ्गिका ॥ ८६ ॥**

[1]द्वौ द्विपदीगीतिरूपौ भङ्गावस्यां द्विभङ्गिका । यथा—

[2]दारुणदेहदाहपविअंभणफुट्टफुट्टंतहारए,
हिअयत्थलनिहित्तघणचंदणपंकुचोडुकारए ।
दीहरसासदड्ढसहिकरयलधुअविअणारविंदए,
तिणयणतइअनेत्तपत्तानलजालकरालचंदए ॥
विरहम्मि तुज्झ एरिसे तह झीणा कुवलयच्छ सदुहंगिआ ।
जह सण्हलक्खहणणयं तीए अंगंमि सिक्खइ अणंगओ ॥ ८६.१ ॥

**अन्यथापि ॥ ८७ ॥**

अन्यैरपि छन्दोभिर्द्वन्द्वितैर्द्विभङ्गी अन्यैरुक्ता । तत्र गाथाया [3]भद्रिकाया योगे यथा—

[4]उद्धाइअझंझानिलझडप्पझंपणपडंतविडवोहे,
अविरलबहलझलक्कंतविज्जुलावलयलहक्के ॥
सरहसरडंतदद्दुरे कणंतमोरे पडंतजलनियहए,
गज्जंतमेहमंडले को जिअइ विणा पिएण पाउसम्मि ॥ ८७.१ ॥

---

1) द्वौ द्विपदीत्यत्र 'पद्चतुर्गा द्वितीयषष्ठौ जो लीर्वा द्विपदी' (४.५५)। 2) दारुणदेहदाहेत्यत्र हे सुभग हे कुवलयाक्ष तव ईदृशे विरहे सा सुदुःखान्यङ्गानि यस्याः सा । तथा क्षीणा यथा तस्याः अङ्गे अनङ्गः सूक्ष्मलक्ष्यहननकं शिक्षति । एतावता अतीव कृशा जातेत्यर्थः । कीदृशे विरहानले । दारुणदेहदाहपरिरम्भणतः स्फुट स्फुटन्तो हारा यत्र स तस्मिन् । हृदयस्थलनिक्षिप्तघनचन्दनपङ्कस्य । उच्चोडो देश्यः शोषे भ्रंशे च । शोषकारके । दीर्घश्वासदग्धं सखीकरधुतव्यजनारविन्दं यत्र स तस्मिन् । त्रिनयनतृतीयनेत्रपत्रानलज्वालाकरालो भालचन्द्रो यत्र स तस्मिन् । 3) भद्रिकाया योगे इत्यत्र एषा भद्रिका गीतिः द्वाभ्यां भद्रिकेति सूत्रेण (३.४) पगणद्वयाधिका गीतिः । 4) उद्धाइअझंझानिलेत्यत्र उद्धावत्येन वाहितो यो झंझानिलस्तस्य ये झडप्पझंपे ताभ्यां कृत्वा पतन्तो विटपौघा यत्र । अविरलबहुलझलक्कंती या विद्युत् तस्याः वलयं तेन लहक्के भीषणे इत्यर्थः । इयं विपुला नाम गाथा । तथा सरभसं रटन्तो दर्दुरा यत्र । क्वणन्तः शब्दायमाना मयूरा यत्र । पतन्तो जलनिवहा यत्र । गर्जन्ति मेघमण्डलानि यत्र । को जीवति प्रियया विना प्रावृषि काले ।

---

१ जुवईस॰ AB. २ कुणति P. ३ उच्चोड K. ४ सहिकरयलधुअ A. ५ धुअ N. ६ तईअ A. ७ लक्खणणयं N; लक्खहणणयं S. ८ द्विभङ्गिका । तत्र E; द्विभङ्गी भवति । तत्र P. ९ उच्चाइअ EN; उव्वाइअ A. १० झप्पसंपत्त NS; झडप्पझंपण AK. ११ पिअएण E.

[1]वस्तुवदनकस्य कर्पूरेण। यथा—

[2]निकंदल कय कच्छ नलिणिवज्जिअ कय सरसरि,
निचंदणु किउ मलउ तुहिणवज्जिउ किउ हिमगिरि।
निप्पल्लव किअ करि पयत्तु कंकेल्लिविडविसय,
पत्तचत्त कय बालकयलि अकुसुम कय तरुलय॥
सिसिरोवयारकिहिं परिअणिहिं निम्मुत्तोहल कय भुवण।
तो वि हु न तीइ तुह विरहभरि खसइ दाह दारुणविअण॥ ८७.२॥

[3]कुङ्कुमेन। यथा—

[4]गयणुप्परि कि न चडहि किंनरि विक्खरहि दिसिहि वत्थु,
भुवणत्तयसंतावु हरहि कि न किरवि सुहारसु।
अंधयारु कि न दलहि पयडि उज्जोउ गहिल्लउ,
कि न धरिज्जहि देवि सिरहि सइं हरि सोहिल्लउ॥
कि न तणउ होहि रयणायरह होहि कि न सिरिभायरु।
तु वि चंद निअवि मुहु गोरिअहि कु वि न करइ तुह आयरु॥८७.३॥

रासावलयस्य कर्पूरेण। यथा—

[5]परहुअपंचमसवणसभय मअउं स किर,
विंभणि भणइ न किं पि मुद्ध कलहंसगिर।

---

1) वस्तुवदनकस्य कर्पूरेणेत्यत्र। 'पचिया युज्यन्त ओजे जो छीवां वस्तुवदनकम् (५.२५)। दाचदालदाचदालि कर्पूरो णः' (७.२)। 2) निकंदल कयेत्यत्र निष्कन्दलाः कृताः कच्छा जलप्रदेशाः। नलिनीवर्जिताः कृताः सरःसरितः निश्चन्दनः कृतो मलयः मलयाचलः तुहिनवर्जितः कृतो हिमगिरिः। तथा प्रयत्नं कृत्वा निष्पल्लवानि कृतानि कङ्केल्लिविटपिशतानि पत्ररहिताः कृताः बालकदल्यः अकुसुमाः कृतास्तरुलताः शिशिरोपचारकृते परिजनैर्निर्मुक्तानि कृतानि भुवनानि। तथापि न तस्यास्तव विरहभरे संमाति दाहदारुणवेदना। 3) कुङ्कुमेन यथेत्यत्र 'सोऽन्त्यलोनः कुङ्कुमः' (७.३)। 4) गयणुप्परीत्यत्र गगनोपरि किं न चटसि। किन्नरि इति पादपूरणे। विकिरसि दिक्षु वस्तूनि। भुवनत्रयसन्तापं हरसि किं न विकीर्य सुधारसम्। अन्धकारं किं न दलसि प्रकटीकृत्य उद्योतं ग्रहिलं भास्वरम्। किं न देवेन हरेण शिरसा ध्रियसे स्वयं शोभावान्सन्। किं न तनयो भवसि रत्नाकरस्य। भवसि किं न श्रीभ्राता। एवंविधस्य चन्द्र तथापि गौर्याः प्रिया मुखं दृष्ट्वा हे चन्द्र कोऽपि तवादरं न करोति। 5) परहुअपंचमेत्यत्र। तेन कारणेन कलहंसगद्गदस्वरा एवंविधा सती किमपि न भणति मौ यदन्ती। अपरपरभृतवचनश्रवणात् सापि बिभ्यति तस्यार्धंभूतः स्वभाव इत्यर्थः। तथा तेन कारणेन सा दर्पणे मुखं न प्रलोकयति यस्मात्सा हासितवदना। दर्पणे हि चन्द्रवन्मुखं भाति। यस्मात्सा साक्षात् चन्द्रं द्रष्टुं अशक्ता। तथा सा मृगनयना नन्दनवनं कुसुमशरं मत्वा क्षणे क्षणे उत्कम्पते। रूपनिधिः स्मरात् कुसुमशरस्य सम्बोधनम्। तत्र दर्शनं भजितव्यम्।

---

१ वस्तुवदनस्य DK. २ नलिन B. ३ गरवरि E. ४ निचंदण E. ५ किय AE. ६ विडविसय DEP. ७ निम्मुत्तहलि K. ८ तीए B. ९ खिसइ A. १० किंनरि कि० L; किन्नरे विक्खिरहि P. ११ दिसहि ADEP. १२ संतव K. १३ किरवि B. १४ दलेहि P. १५ गहिल्लओ DK. १६ सिरिहि P; १७ रयणायरु CE; रयणायरह D. १८ मुह P. १९ गोरिअहे A; गोरिअहे K.

चंदु न दिक्खण[1] सक्कइ जं सा ससिवयणि,
दप्पणि मुहु न पलोअइ तिंभणि मयनयणि ॥
वेइरिउ[2] मणि मंन्नवि[3] कुसुमसरु खणिखणि सा बहु उत्तसइ।
अच्छरिउ[4] रूवनिहि कुसमसरु[5] तुह दंसणु[6] जं अहिलसइ ॥ ८७.४ ॥

कुङ्कुमेन। यथा—
[1]जइ अ झलक्कहिं[7] नयण[8] दीहनयणि[9]अहि खणु,
केअइकुसुमदलम्मि[10] भसलु विलसइ त जणु।
जइ तीए[11] मुहि[12] हावि मदु हासउ[13] चटइ,
ता[14] जणु हीरयपउमरायसचउ झटइ ॥
जइ तीएं महुरमिउभासिणिहि वयणगुंफे[15] निमुणिज्जइ[16]।
तंविह[17] करेप्पिं[18] जणु अमयरसु कण्णपण्णपुडि पिज्जइ ॥ ८७.५ ॥

वस्तुवदनकरासावलयसंकीर्णस्य कर्पूरेण। यथा—
[2]अविहडअवरुप्पर[19]परूढगुणगठिनिबद्धउ,
एंआरिणि[20] हलि गलइ पिम्मु सरलिमवसलद्धउ।
माणमडप्फरु तुह न जुत्तु उत्तिमरमणि,
तिंभणि वारउ वारवार वारणगमणि[21] ॥
अह करिहि[22] कलहु वइहिण सहु इच्छि मयच्छि[23] इ पणयमुहु[24]।
माणिक्किमणसिणि करिवे[25] वलु हेलि खेल्लिवा जूउ तुहुं[26] ॥ ८७.६ ॥

1) जइ अ झलक्कहिं इत्यत्र यदि दीर्घनयनाया स्त्रिया नयन अभीक्ष्ण दीप्यत तदा केतकीकुसुमदल भ्रमरो विलसतीति 'जणु' उत्प्रेक्षार्थः। उत्प्रेक्षत। यदि तस्या मुखे हावेन हास्य चटति तदा हीरकपद्मरागसञ्चय झटति पततीत्यर्थः। जणु इवार्थे। तथा यदि तस्या मृदुमधुरभाषिण्या वचनगुम्फो नितरा धूयते तदा कर्णपर्णपुट कृत्वा जनैरमृतरस पीयते। 2) अविहडअवरुप्परेत्यादि अविघटपरस्परप्ररूढगुणग्रन्थिनिबद्धः अतिचारेण प्रस्तावादहङ्कारेण सरलिमवशलब्ध प्रेम हे सखि गलति। तन कारणेन मानप्राग्भार' तव न युक्तो हे उत्तम रमणि। त्वा वारवार वारयामि। अथवा करिष्यसि कलहं यदा तदा हे हस्तिगमने प्रणतमुख भर्तृमुख इच्छि दृष्ट्वा हे मानैकमनस्विनि हे सखि बल अपि कृत्वा क्रीडितु युक्त तव।

१ दक्खिण D २ वयरिउ A. ३ मन्निवि P ४ अच्छरिय A ५ कुसुमसर BP ६ दसण A ७ झलक्कहि S ८ नयणु P ९ दीणन॰ A १० दलम्मि Ad ११ जइ य ताइ Kd, जइ तीइ A १२ मुहहावि Ad १३ हासु A १४ ताइ AbdP १५ वयणगुफ BPS १६ निसुनिज्जइ AS १७ ताधुउ Ad १८ करिप्पि BP १९ इप्परप्प DS, रोप्परप्प B २० अइयारिणि P २१ वारणगामणि S २२ अह करहि S, अह करहि P, अह किरहि D २३ मयच्छिए S २४ पणयमुहु KKd, पणयमुह A २५ करि हवल हेलि खिलि BE. २६ ताज्जुउ तुह C, ताजूओ तुह D, ताजओ तुह ^, ता जउ तुह B

कुङ्कुमेन । यथा –

[1]"पडिगडयलपुलयपयरपयडणनह्वायरु,
कचिरीलयालाविलासरहलिमगुणनायरु ।
दविडिदिव्वचपयचयपरिमलल्हसडउ,
कुतलिकुतलदप्पझडप्प[3]णलपडउ ॥
मरहट्ठिमाणनिर्द्धाहवयविहैवविद्दसणसकउ ।
कसु करइ न मणि हल्लोहलैउ मलयानिलहु झुलकउ ॥ ८७ ७ ॥

रासानलयवस्तुवदनस्संकीर्णस्य कर्पूरेण । यथा –

[2]"तरुणिहूणिगडप्पहुपुलिअतिमिरमसि,
उकझुलुकायडणु दुसहु मा करउ ससि ।
मलयानिलु मयनयणि धुणिअंकप्पूरकयलिवणु,
सधुकिअमयणग्गि सेहि इ मा तुज्झ तवउ तणु ॥
तणुअगि म रुटहडि पटहि तुह मयणबाणवेअण कलहे ।
चय माणु माणि वल्लहिण सहु चडि म जीवसंसयतुलह ॥ ८७ ८ ॥

कुङ्कुमेन । यथा –

[3]"सवणनिहिअहीरयहसतकुटलजुअल,
थूलामलमुत्तावलिमडिअथणस्मल ।

---

1) पडु(डि)गडलये(यल)त्यत्र । पाण्डुदशोद्भवाना स्त्रीणा गण्डतले यत्पुलकप्रकरप्रकटन तत्र बद्धादर । काञ्चीपालाना काञ्चीदेशस्वामिनां या बालाम्नासां विलासरहलिमगुण नागर इव नागर । नागरा हि विलासभाजो भवन्ति । दविडित्ति द्रविडीदिव्यचम्पकपरिमललुण्ठाकश्चौर । कुन्तलदशो पञ्चसायकदर्पदलने अक्षने लम्पट । महाराष्ट्रीमानप्रानशाम्ननविभवविध्वसनसक्त आमन्त । एवंविधो मलयानिल यस्य मनसि करोति[न] हल्लोहल आनन्दम् । स्मसर( सवस्य )इति यावत् । 2) तरुणिहूणि इत्यत्र तरुण्यो हूण्यो हूणदशजा नार्य तासां गण्डस्थमाणततिमिरमसक । तासां मुखात् श्यामतपनीतात भाव । उल्काचयनापावन दुस्सह मा करोतु ... ... । ... कर्पूर कदलीवनं ... । सधुक्षितमदनाग्नि मलयानिल ते तव तनु तनु स्तोकमपि मा तापयतु । इ पादपूरण । ह सुभगे तव अङ्ग । मा निरेध । रुडइहडनि अनुसरण । मदनबाणरदना पततु अत एव मान त्यज । मान मान मा चर जीवसशयतुलनम् । मरणावस्थामित्यर्थ । 3) सवणनिहिअहारयत्यत्र श्रवण निहित हारके शोभमान कुण्डलयुगल यया सा । स्थूलामलमुक्तावलीमण्डित स्तनकमळ यथा सा । ... प्रावरण यस्या सा । बहुल ... । बहुप्रफुल्लविचकिलपुष्पै पुष्पिता कृता यस्या सा । ततोऽनन्तर प्रकटीभूय । प्रियतम पद्धति-प्रति । अभिसारिका अभिसरन ... दर्शनानीत ... भय तन भारता उत्कटा । ... सुन्दरीणां निशायाम् ।

---

१ किंचिवाउ D   २ द्वाविडि Ad दविड D   दवडि LO   ३ कप्पण Ad.   ४ निहाहव A, निहावन BA   ५ विविह Ad   ६ हलाहलउ B   ७ पद A, D repeats हुण to रासा after पुलिअ   ८ उकलउ० CDY उकुडउ० Ad उहुडडु० ABF   ९ करहु A   १० धूलिअ C, पुलिअ Y   ११ तुमहु मा रहउ तुम्ह Ad   १२ कल्हु A, कलहइ D   १३ जीवसं० E

सेअंसुअपंगुरण वहलसिरिहंडरसुज्जल,
वहुपहुल्लविअइल्लफुल्लफुल्लाविअकुंतल ॥
तो पयँड धाइ दंसणजणिअखलयणडरभरभारिअ ।
अहिसरइ चंदसुंदरनिसिहिं पइं पिअयम अहिसारिअ ॥ ८७.९ ॥

वदनकस्य कर्पूरेण । यथा–

[1]किं न फुल्लइ पाटल परपरिमल,
महमहेइ किं न माहवि अविरल ।
नवँमालिअ किं न दलइ पहिल्लिँअ,
किं न उल्लरइ कुसुमभरि मल्लिअ ॥
दीहिअतलायसरतैल्लटिहिं किं न पसाहि पउमिणि फुडइ ।
तु वि जाइ जायगुणसंभरणु झाणु कि भसलेहु मणि खुडइ ॥ ८७.१० ॥

कुङ्कुमेन । यथा–

[2]जइ तुहुं महुं करयलु उम्मोडवि,
चल्लिअ चीरंचलु अच्छोटवि ।
माणिणि तु वि पसाउ करि सुम्मउ,
पइं पिइ उत्तावलिअ म गम्मउ ॥
जइ किंवइ वि संचरई पयजुयलु इत्थु विहिवसिण विहट्टई ।
ता तुज्झ मज्झु खीणँउ खरउ किं न खामोअरि तुट्टइ ॥ ८७.११ ॥

एतौश्च वस्तुवदनककर्पूराद्या द्विभङ्गिकाः षट्पदा इति, सार्धच्छन्दांसीति च, सामान्याभिधानेन मागधानां प्रसिद्धाः । यदाह–

जइ वत्थुआण हेट्ठे उल्लाला छंदयंमि किज्जंति ।
दियँढच्छंदयछप्पयकव्वाइं ताइं वुच्चंति ॥ ८७.१२ ॥ इत्यादि ।

1) किं न फुल्लइ पाडल इत्यत्र परः परिमलो यस्य सः पाटलः किं न पुष्पति । अविरला माधवी किं न महमहेइत्ति - गन्धं करोति । प्रहृष्टा मनो नवमालिका किं न विकसति । कुसुमभरेण मल्लिका वृद्धिं न प्राप्नोति । तथा च दीर्घिकातडागसरःपल्वलेषु । तडाक खात महत्सरः तदेव लघु सरः । 'सरइहतलायसरेसु' इत्यत्र विशेष० तयोः । तडाग पल्वलं अखातं सरः तेषु प्रसाधनाभिः पद्मिनी स्फुटति । परं तदपि जातिगत गुणस्मरणं यत्र एवंविधं ध्यानं भ्रमरस्य [ मनसि ] खुडइ स्यात् करोति ? अपि तु न । एतेषु पदार्थेषु सत्स्वपि जातावेव भ्रमरस्य ध्यानं नान्यत्रेति भावः । 2) जइ तुह महु करयलेत्यत्र यदि त्वं मम करतलं उन्मोटयित्वा आमोट्य चलिता चीराञ्चलं नपि अच्छोडिअ(डवि)त्ति आकृष्य च । तथापि हे मनस्विनि प्रसादं कृत्वा मम हे प्रिये पई त्वया औत्सुक्येन मा गम्यताम् । यदि कथमपि सचयात्मपादान् या इह पदयुगलं विधिवशेन विघटते स्खलतीत्यर्थः । तदा तव मध्यं उदरं अतीव क्षीणं सत् किं न क्षामोदरि त्रुट्यति । कोऽर्थः । औत्सुक्यतः प्रयान्त्यास्तव यदि विसंष्ठुलतया पादः पतिष्यति तदाऽपि क्षामोदरं मध्यं त्रुटिष्यतीति दानेगच्छेति भावः ।

१ विअइल्लुल D. २ पयडभय Kd; पयड पाद S. ३ नवमालिअ N. ४ पहलिय S. ५ तलइटुँहिं BP. ६ भसउ हु CN. ७ तुह मुह D; तुह तुहु N. ८ महहु A; महह DN. ९ विसद्द A; विहइ N. १० खीणउ A; खीनउ N. ११ अत च P. १२ हिट्ठे P. १३ दियड्ढच्छंदय ACDN.

एवं मात्राया अप्युपरि द्विपद्युल्लालका वस्तुकादीनामप्युपरि दोहकादयो द्विभङ्ग्या-मेव द्रष्टव्याः । वृद्धानुरोधात्तु [1]रड्डा पृथगभिधास्यत इति सर्वमवदातम् ॥ ८७.१२ ॥

**द्विपद्यवलम्बकान्ते गीतिस्त्रिभङ्गिका ॥ ८८ ॥**

पूर्वं द्विपदी पश्चादवलम्बकस्तदन्ते गीतिरिति त्रिभङ्गिका । यथा—

[2]निब्भरदलिअसत्तदलपायवसंकडतडिणिपुलिणिआ,
सेहालिअपसूणपरपरिमलपुण्णपहायपवणया ।
कुवलयगंधलुद्धफुल्लंधुअपत्थुअगीतिभंगिआ,
पंकयवणकणंतकलहंसीकुलहुंकारसंगिआ ॥
ओहट्टिअचिक्खिल्लया, निम्मलजलसोहिल्लया,
रायरणूसवदूअया, कलमामोअपसूअया ॥
तिहुअणलच्छीभवणया जोण्हाजलभरिअनहयलाभोअया,
कस्स न हरंति चित्तयं एए लोअंमि सारया दिअहया ॥ ८८.१ ॥

**त्रिभिरन्यैरपि ॥ ८९ ॥**

अन्यैरपि त्रिभिश्छन्दोभिः श्रुतिसुखैस्त्रिभङ्गिका । तत्र मञ्जरीखण्डितान्ते भद्रि-कागीतिः । यथा—

[3]उच्छलंतछप्पयकलगीतिभंगिधरे,
विप्फुरंतकलयंठिकंठपंचमसरे ।
गिज्जमाणहिंदोलालवणपसाहिए,
चचरिपडहोद्दामसद्दसंखोहिए ॥

1) रड्डा पृथगभिधास्यत इत्यत्र 'आद्यो तृतीयस्य पञ्चमेनानुप्रासेऽन्ते दोहकादि चेद्वस्तु रड्डा वा' (५.२३) इति । 2) निब्भरदलिअ इत्यत्र एते लोके वसन्तवासराः (?) कस्य चित्तं न हरन्ति अपि तु सर्वेषां हरन्तीत्यर्थः । कीदृशाः । निर्भरं दलिता विकसिता ये सप्तपर्णपादपास्तैः संकुलं तटिनीपुलिनं येषु । तथा सेफालिकाप्रसूनप्रकृष्टपरिमलैः पूर्णाः प्रभातवायवो येषु । तथा कुवलयगन्धेषु लुब्धा ये पुष्पंधया भृङ्गास्तैः प्रस्तुताः प्रारब्धाः गीतीनां भङ्ग्यो येषु ते । तथा कमलवनेषु क्वणन्त्यः शब्दं कुर्वन्त्यो याः कलहंस्यस्तासां ये हुंकाराः शब्दाः तैर्यो सङ्गः सम्बन्धो येषु ते सङ्गिनः । तथा ओहट्टिअत्ति-निवृत्त चिक्खिल्लः कर्दमो येषु ते स्वार्थे कः । निर्मलजलशोभनशीलाः । राजन(र)णोत्सवदूतकाः कथयितारः । कलमामोदान् प्रकर्षेण सूचयन्तीति कलमामोदप्रसूचकाः । त्रिभुवनलक्ष्मीगृहाः । ज्योत्स्नाजलभृतनभस्तलाभोगाः । 3) उच्छलंतछप्पेत्यत्र ईदृशे चैत्रमासे यस्य पार्श्वे प्रियमानुषो न भवति अर्थात् कामिनी स कथं जीवति । कीदृशे चैत्रे । उच्छलत्षट्पदकल-गीतिभङ्गिधरे, विस्फुरन्त्यः कलकण्ठीकण्ठात् पञ्चमस्वरा यस्मिन्स्यः तस्मिन्, गीयमानाहिन्दोलरागप्रसाधिते चर्चरीपटह उद्दामशब्दात् शङ्खः एते यथोऽपि संख्याधिका यत्र स तस्मिन्, विकसितचम्पाशोकलते केसर-कुसुमामोदमये विकसितमाकन्दवने घनः दोलन् दक्षिणपवनो यत्र हे सखि हे वयसे स कथं जीवति । कीदृशः । विद्धो मकरध्वजभल्लिकाभिः ।

१ यो A. २ निब्भरो A. ३ पयाहर॰ A; पदा॰ॅ॰ D. portion from तथा to येषु repeated in A. ४ चंगिआ A. ५ चिक्खिल्लिआ AP ६ रायूसव K. ७ दिअया A ८ This Sutra is dropped in G. ९ यथा तत्र A. १० कलकंठि॰ B; कलकंठिपंचसरे AKd. ११ कलयंठकंठि॰ B; कलयंठि॰ C. १२ गिज्जमाणहिंडोला Kd. १३ पडहुद्दाम Kd. १४ संखोहिए AKd.

विअसिअरत्तासोअलए, वेसरकुसुमामोअसए।
पंफुल्लिअमायदवणे, घणघोलिरदक्खिणपवणे॥
इअ एरिसमि चेत्तए जस्स न पासमि अत्थि पिअमाणुस।
सो कह जिअइ वयसिए विद्धो मयरद्धयस्स भल्लिआहिं॥ ८९ १॥

**गाथस्याद्यार्द्धं समैश्चैर्गात् प्राग्वृद्धं गस्य ते पादः समशीर्षकम्॥९०॥**

"गाथस्य प्रथमार्द्धमन्त्याद्गुरोर्वाक् समैश्चगणैर्वृद्धमन्त्यस्य च गुरोः स्थाने ते त्रिमात्रे सति पादश्चेद्भवति तदा तादृशैश्चतुर्भिः पादैः समशीर्षकम्। यथा–

"सरसयरसुरहिसुस्सायतरुणमायदमउलमजरिदलोहक्वलणकसायसमुद्धक्ठकल्यठिनिअरकठोच्छलंतपचमपलावबोल्लयमि रुदारविंदमयरदविंदुसदोहपाणसाणदभमरनिउरंबबहलझंकारमुहलिउज्जाणचारुलच्छीए तिहुअणमणहरे,
दक्खिणसमुद्दकल्लोलमालिआतरुणसगनिव्वविअमलयमारुअझटप्पहल्लवविविहबहुवेल्लिगहणघणकुसुमगोच्छउच्छलिअपउरपिंजरपरायपडिहत्थदहदिसाचक्कदसणुप्पण्णपिअयमाभरणमिलिअमुच्छापहारनिवडंतपहिअसघायरुद्धमग्गतरदूसचरधरे।
पप्फुडिअसघणकिंसुअसमूहकणिआरकुंदवरकचणारकेसरल्लवगचपयपिअगुमल्ली-मल्लमाहविविअणकंकेल्लितिलयकुरुवयपिआलपुनागनागकेसरसुवण्णकेअइकुटगपाटलतमालनोमालिउल्लपसरतपरमपरिमलयवकमहमहिअसमत्तवणतरे,

1) गाथस्य प्रथमार्द्धमित्यत्र चयोगाथ। गाथैव पूर्वार्द्धऽन्त्यगात्प्राक् चगणद्वयस्य वृद्धौ गाथ (४ ११)। समैरष्ट-दशादिभिर्न सप्त-नवादिभि। 2) सरसयरसुरहीत्यत्र। एवंविधे वसन्ते मा वर्जनि मा याहीति क्रिया सबन्ध। सरसतरा सुस्वादु सा चासौ तरुणमाकन्दमुकुलितमञ्जरी तस्या दलौघ तस्य कवलन तेन कषायित सशुद्ध कण्ठो यासा कलकण्ठ्यस्तासां निकर तस्य कण्ठात् उच्छलत्पञ्चमस्वराणा बोल्लालमित्ति बोल्ला शब्दा स्तद्वति, रुन्दानि विपुलानि यान्यरविन्दानि तेषा मकरन्दास्तेषा विन्दवस्तेषा सदोहस्तस्य पानेन सानन्द यत् भ्रमरनिकुरम्ब तस्य बहला झंकारास्तैर्मुखरिता उद्यानस्य चारु लक्ष्मीर्यत्र, त्रिभुवनजनमनोहरे, दक्षिणसमुद्र कल्लोलमालिकया सह तरुणो नवो य सगस्तेन निर्वापित शीतीकृत स चासौ मलयवायु [तेन] झटिति हठात्कम्पायमाना विविधा नानाप्रकारा बह्व्यो भूयस्यो या वल्ल्यस्तासा वन गहन तस्य घनकुसुमगुच्छात् उच्छलित प्रचुरपिञ्जरपीतपरागस्तेन व्याप्त यद्दशदिक्चक्र तद्दर्शनादुत्पन्न प्रियतमकान्तास्मरण तेन मिलित प्राप्तो यो मूर्च्छाप्रहारस्तेन निपतन्तो ये पथिकास्तेषा सघ तेन रुद्धमार्गान्तरेण दुःसचर सकीर्णभाव तस्य धरे धारके। प्रकर्षेण पुष्पिता सघना निबिडा ये किंशुकवनमल्लिकाद्या वृक्षास्तेषा उल्ल आर्द्र प्रसरन् परिमलो येषु ते एवविधा स्तवका गुच्छकास्तै महमहिअत्ति सुगन्धीभूत समस्तवनान्तर यत्र। मा वच्च हे कान्त इमां मां त्यक्त्वा। मां कीदर्शीं मदनपीडिताम्। कीदृशे वसन्त। तरुणासार्थ चर्चरीविनोदेन सह स्पर्धया नाट्यो यो दण्डाभिघात शब्दस्तदन्तराले तालानुलग्नपूर्णमृदङ्गोद्दामपाठेन प्रपञ्चा या मञ्जुलमन्तराभङ्गी आलपनरेखा तया सबद्धानि वेणुविवरोल्लस स्वरभेदसाधनस्थानानि तै सहे समर्थे।

१ मोयए A २ पप्फाइय C ३ दक्खण DNS ४ चित्तए AKD ५ पिअमणुस्स B ६ अन्नस्स N ७ अन्तस्स P ८ सारू F ९ सरसयसुरहि॰ N १० बोलाउयमि P ११ नउरुब BDS १२ विहूअणमण॰ A, तिहुअणजणमण॰ Ch १३ दक्खिणकस॰ S १४ तरणसग ADNPa, तरलणसङ्ग B १५ हल्लत AS १६ दिहाचक्क P १७ दसणुप्पण्णुपि॰ CNS, दसणुप्पन्नपि॰ A १८ दूसचरे P १९ पप्फुल्लअसघण ACDNS २० कुरवय BP २१ पचक NS

मा वच्च कंत चत्तूण मं इमं मयणपीडिअं तरुणिसत्थचच्चरिविणोअ-
समसीसनट्टदंडाहिघायसद्दंतरालतालेणुलग्गघुम्मंतमद्दलोद्दाम-
पाडपडियव्रमंजुहिंदोलमंगिआलवणरेहसंवद्धवेणुविवरो-
ह्लसंतसरभेअसाहणद्धाणसहंसि वसंतए ॥ ९०.१ ॥

अत्र समस्थाने जो लीर्वा तथान्त्याचगणात्प्रागेकश्चगणो जो लीश्च न कर्तव्यः इत्याम्नायः ॥ ९०.१ ॥

मालागलितकपादान्ते विषमचांवृद्धौ वेः ॥ ९१ ॥

मालागलितकपादस्यान्ते विषमसंख्यस्य चगणद्वयस्य वृद्धौ सत्यां वेः परं समशीर्षकम् । विषमशीर्षकमित्यर्थः । [1]मालागलितकवच्चात्रापि समस्थाने जो लीर्वा । विषमे तु जगणो न कर्तव्यः । यथा—

[2]हयवरखुरखणिज्जमाणमहिरेणुपडलवहलिज्जमाणगयणं-
गणुत्थरिदअविरलंधारपुंजसंवलणरुद्धलोअणविलोअणपवंच-
मच्छरिअपरवसो अयरइ समंतदो तुरिदममरनिअरो,
निब्भरसंचरंतचउरंगसेन्नपब्भारचलिंरलीसेसभूवलयखडहडंत-
मंदरसुमेरुकइलासविंझगिरिनारपभुदिगिरिसिहरनिव-
डणाइभरभंगुरिद्कंधराई तम्मइ वराहपवरो ।
धाणुंकावमुक्कनारायविद्धकरडिघडकुंभतडनिवडिदाविरलरंध-
निझरझरंतसोणिदतरंगिणीरइअवहलपंकखुप्पंतचक्करह-
संचराओ एआओ भीसणाओ समरवसुहाओ,

1) मालागलितकवदित्यत्र । पाश्चूर्नीजे जः समे जो लीर्वा मालायाः (४.२४) । 2) हयवरखुरेत्यत्र अत्र संग्रामभूमौ अमरनिकरो अवतरति । कथम् । अच्छरियत्ति–आश्चर्यपरवशः यथा भवति । हयवराणां खुराः तैः खन्यमाना या मही तस्या रेणुपटलेन व्याप्यमानं यद् गगनाङ्गणं तद्योगादुल्लसिताविरलान्धकारपुञ्जस्य प्रसरणं तेन रुद्धनयनविलोकनप्रपञ्चो यत्रेति क्रियाविशेषणम् । त्वरितं यथा स्यात्तथेति । समंतदा(दो) सर्वत्र संग्रामे सति । वराहः प्रवरः तम्मइत्ति–खेदं प्राप्नोति । कथंभूतः । निर्भरं संचरच्चतुरङ्गसैन्यप्राग्भारेण चलितं यन्निःशेषभूवलयं तेन खडहडन्तो ये मन्दरकैलासविन्ध्याचलगिरिनारप्रमुखगिरीणां शिखरास्तेषां निपतनादिभिर्भारेण भङ्गुराः कन्धरादयो यस्य स तथा । कथंभूतायाम् । धानुष्का धनुर्धरास्तैरवमुक्ता नाराचास्तैर्विद्धकरटिघटाकुम्भतटात् आपतदविरलरन्ध्रनिर्झराः तेभ्यो क्षरत्-शोणितानि तान्येव नद्यः तासु रचितो यो बहुलः पङ्कः तत्र चक्रस्खलनात् स्थितरथेन दुःसंचरायां एतस्यां समरवसुधायां सुविषमशीर्षकाणि हुंकारं कुर्वन्ति निपतन्ति इति त्वं पश्य । निशितकरवालधारयाभिघातः तेन घूर्णयन्त्य इमाः बहुविधसुभटकबन्धपङ्क्तयो नृत्यन्ति । कथंभूतायाम् । सुरवधूभिर्निर्मुक्तानि पारिजातानां कुसुमानि यस्यां तस्याम् ।

इत्याचार्यहेमचन्द्रविरचितछन्दोऽनुशासने चतुर्थस्याध्यायस्य पर्यायाः ॥

१ तालत्ताणुलग्ग A. २ घूमंत D. ३ तथा to लीश्च dropped in A. ४ चवृद्धौ G. ५ गुत्थदरिअनिरंधपा° A. ६ अवयरदि BP. ७ वलिर N. ८ भूवयल्व्दसंडह्डंत D. ९ विध N. १० कंधराउ B. ११ धणुक्का° AS. १२ ताराय N. १३ निविडिदावि° D. १४ निब्भर ABN. १५ संवराओ N; संचराउ BCDP; संवराउ A; संचराए ( Loc also in the next 3 words ) K.
२२ छन्दो°

सुविसमसीसियाइं निवटंति रुंडरंगाइं पिच्छ निसिदकरवालधारो-
हिपायपुम्मंवयाइं संपइ इमाओ नचंति बहुविहलुहढ-
फबंधपंतीओ सुरवहूसुपरिजायविटविकुसुमाओ ॥ ९१.१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ आर्यागलितकखञ्जकशीर्षकव्यावर्णनो नाम

चतुर्थोऽध्यायः ॥ ४ ॥

ग्रन्थाग्रं ५५१; उभयं २०९७ ।



१ सुविसमसयाइं D; सुविसमखिसयाइं N. २ पेच्छ P. ३ धराहिघाय N. ४ परिजायपविडवि D.

## अथ पञ्चमोऽध्यायः ।

**अथ प्रायोऽपभ्रंशे ॥ १ ॥**

संस्कृतप्राकृतच्छन्दोऽनन्तरमपभ्रंशगतानि छन्दांस्यधिक्रियन्ते । प्रायोग्रहणाद्भाषान्तरेऽपि भवन्ति ॥ १ ॥

**अजश्चूस्तृतीयपञ्चमौ जो लीर्वोत्साहः ॥ २ ॥**

जगणरहिताः षट् चगणा उत्साहः । अत्रापवादः । तृतीयः पञ्चमश्च जगणो लघुचतुष्टयं वा । यथा –

[1]अवमन्निअदुट्ठुचित्तसंगमयचक्कघाय,
जे ते सोच्छाह नाह झायंति तुज्झ पाय ।
ते ते संसारि वीर कह वि न लहंति दुक्खु,
जं किर वचंति झत्ति पहु निच्छएण मोक्खु ॥ २.१ ॥

इदानीं रासकानाह –

**दामात्रा नो रासको ढैः ॥ ३ ॥**

दा इत्यष्टादशमात्रा नगणश्च रासकः । ढैरिति चतुर्दशभिर्मात्राभिर्यतिः । यथा –

[2]सुररमणीअणकयबहुविहरासयथुणिअ,
जोइविंदाविंदारयसयअमुणिअचरिअ ।
सिरिसिद्धत्थनरेसरकुलचूलारयण,
जयहि जिणेसर वीर सयलभुवणाभरण ॥ ३.१ ॥

[3]सर्वा अपि जातयो रासका भवन्तीति केचित् । यदाह –

[4]सयलाओ जाईओ पत्थावबसेण एत्थ बज्झंति ।
रासाबंधो नूणं रसायणं बेट्ठगोट्ठीसु ॥ ३.२ ॥

**चुल्गा वा ॥ ४ ॥**

चतुर्मात्रपञ्चकं लघुगुरू च यदि वा रासकः । पृथग् योगात् ढैरिति [11]न वर्तते ।

1) अवमन्निय इत्यत्र अवगणितः दुष्टचित्तसुराधमसंगमकस्य चक्राभिघातो येन तत्सम्बोधनम् । हे नाथ ये युष्माकं पादं ध्यायन्ति सोत्साहाः सन्तः ते पुरुषा हे वीर संसारदुःखं न लभन्ते कथमपि । यस्मात् ते । किलेति सत्ये । शीघ्रं प्रभो मोक्षं निश्चयेन यान्ति । 2) सुररमणीत्यत्र हे सुररमणीकृतबहुविधरासकेन स्तुत । योगिवृन्दवृन्दारकाः प्रधानास्तेषां दावैरज्ञातचरित इत्यर्थघटना तस्य संबोधनं हे श्रीसिद्धार्थकुलचूलारत्न हे जिनेश्वर हे सकलभुवनाभरण त्वं जयेति सटकः । 3) सर्वा अपि जातयो रासका इत्यत्र तावच्छन्दसां द्वौ भेदौ वृत्तानि जातयश्च । 4) सयलाओ जाईओ इत्यत्र प्रस्तावबसेनेति (प्रस्तार० घटने P.) सम्यक्पाठान्तरं गुरूपदिष्टम् ।

१ स्युः KP. २ अजग to उत्साहः dropped in A. ३ सुच्छाह BE; सुच्छाह P; सोच्छाह CN. ४ मारसु A; दुक्खु BE. ५ इदानीं to रासकौ repeated in A. ६ सुरार० N. ७ भवमा० E. ८ पत्थाव० N(KP). ९ रस A. १० वेट्टगोट्ठीसु N; विट्ठगो० P; वेड्डुगोट्ठीसु A. ११ रास. E. १२ निवर्तते B.

यथा–

"गोवीअणदिज्जंतयरासय निसुणंतहं,
वासारत्ति पहुचइ पहिअहं पवसतहं ।
निअवल्लह तिंव केम्वइ हिअयतरि निवडिअ,
जिंव जंतंह न वहति चलण नावइ निअडिअ ॥ ४.१ ॥

**चपज्जाया अवतंसकः ॥ ५ ॥**

चतुर्मात्रः पञ्चमात्रो जगणद्वयं यगणश्च अवतंसकः । यथा–

"सायरु रयणायरु बोल्लहिं जं बुहसेल्थ,
त सच्चु जि जाय निसायरकुच्छुह जत्थ ।
जह एक्कु हूउ सिरिकंठसिरे अवयंसु,
अवरु सिरिनाहउरि भूसणु उल्लसिअंसु ॥ ५.१ ॥

**चः पौ जो गौ कुन्दः ॥ ६ ॥**

चतुर्मात्रः पञ्चमात्रद्वयं जगणो गुरुद्वयं च कुन्दः । यथा–

"अहरुट्ठ दलइ जवापसूण दन्त कुंद,
पाणिचरणनयणरयण विअसिअअरविंद ।
कुसुमंपुरु पच्चक्खु वि सुंदरि तुज्झ देहु,
तुंह वरु मज्झदेसु वहसि विवरीउ एहु ॥ ६.१ ॥

**पाचाजगाः करभकः ॥ ७ ॥**

पञ्चमात्रद्वयं चतुर्मात्रद्वयं जगणो गुरुश्च करभकः । यथा–

"करहयथणहरगलिअलोलमणोहरहारय,
गडत्थलल्लुलिअमइलजटिलकुंतलभारय ।

1) गोवीअणत्यत्र गोपीजनदायमानरासक शृण्वत वर्षारात्रि पर्याप्यते । भुव पर्याप्ती हुव (सि० है० ८ ४ ३९०) इत्यादेश । पुस प्रवास गच्छत हृदयान्तरे तथा क्वापि निप्पतति निजवल्लभा यथा निगडितमिव चलनम् । न वहति गन्तुमित्यर्थ । नावइत्ति–इवार्थे । 2) सायरु रयणायरु इत्यत्र सागरो रत्नाकर इति यत् बुधसाध कथयन्ति त सत्यमेव । तत्कथमिति । यत्र उभौ निशाकरकौस्तुभौ जातौ यथा एक श्रीकण्ठशिरसि अवतस समभूदपर श्रीनाथोरसि भूषण समभूदिति । कीदृशः । उल्लसिता अंशवो यस्य । 3) अहरुट्ठ दलइत्ति अधरौष्ठौ जपाप्रसून दन्ता कुन्दान् कुन्दपुष्पाणि, पाणिचरणनयनवदनानि विकसितारविन्द विदलयन्ति । प्रत्येक क्रिया एकवादिना याज्या । विदलयन्ति निरस्करोति । अत एव हे सुन्दरि तव वपु प्रत्यक्ष कुसुमपुर वर्तते कुसुमसमूह पक्षे कुसुमपुर पाटलिपुत्र प्रत्यक्षम् । तत कथ मध्यदेशोऽप्यधिस्त्वं मभवति । एव वैपरीत्यम् । पक्षे मध्यदेश कटिप्रदेश । पाटलिपुत्रनगर गङ्गातट एवास्ति प्रयाग इति प्रसिद्धम् । 4) करहय थणहरेत्यत्र करहतस्तनभरात् हृदयात् गलिता मनोरथवद्धारा यस्य स । गण्डस्थले विलुलितो मलिनो जटिलो जटावान् कुन्तलाना भारो यस्य स । अनवरत बाष्पनिपतनेन मुख सशोफ तथा शोण विलोचन यस्य स । हे नरपत तव वैरिवधूजन ईदृश समभूत् ।

१ किम्वइ ABCD१ २ जनह १, जतह AE, जे तह D ३ निअडिअ १S, निघडिअ B ४ चपजा G ५ सच्चु B ६ एक हूउ A, इक्कु हुउ F एक्कु हूओ १ ७ सिर to अवरु dropped in G ८ सिरिनाहउरि B ९ चपौजो० G १० कुसुमपुर B, कुसुमपरु C ११ तुम्भ CN १२ तुहु वरु BF, तुह वर A, तउ वरु K (?) १३ मणोरहहारय AB

अणवरयवाहनिवडणसूणसोणविलोअण,
तुह हुँअ नरवइतिलय सपय वेरिविहूअण ॥ ७.१ ॥

## चपाचागा इन्द्रगोपः ॥ ८ ॥

चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रद्वयं गुरुश्च इन्द्रगोपः। यथा—

"रेहहिं अरुणकंति धरणीअलि इंदगोवया,
पाउससिरिहि नाइ पय जावयविंदु लग्गया।
एह वि विज्जुलेह झलकतिअ वहलकतिआ,
लक्खिज्जइ जायरूवनिम्मविअ व्व कंठिआ ॥ ८.१ ॥

## चपाचाल्गाः कोकिलः ॥ ९ ॥

चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रद्वयं लघुगुरू च कोकिलः। यथा—

"हसि तहारंउ गइविलसु पटिहासइ रित्तओ,
कोइलरमणि इ तुह वि कंठु कुठत्तणु पत्तओ।
विरहय ककेल्लिहिं दोहल सपइ पूरतिअ,
जं किर कुरलयनयण एह हिंडइ गायतिअ ॥ ९.१ ॥

## चपाचल्गा दर्दुरः ॥ १० ॥

चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रो लघुगुरू च दर्दुरः। यथा—

"मत्तंबुवाह बरसतिण पइ समहिउ,
आयण्णमु सपयं महिअलि ज विरइउ।
हंसह कलसद्दिण ज आसि मणोहरु,
दद्दुररडिआउलु निम्मिउ त सरवरु ॥ १०.१ ॥

1) रेहहि अरुणेत्यत्र इन्द्रगोपका कीटविशेषा धरणीतले राजन्ते। कीदृशाः। अरुणा कान्तिर्येषां ते। तथा इवोत्प्रेक्षते। प्रावृट्श्रियः पादा। कीदृशा। अलक्तानां बिन्दवो लग्ना येषु ते। तथा एता विद्युल्लेखा झलकन्ती शोभमाना बहुलकान्ति लक्ष्यते जायते। कथ। जातरूपनिर्मिता कण्ठिकेव। नाइ उत्प्रेक्षार्थे। 2) हसि तहार उ इत्यत्र हे हंसि त्वदीयगतिविलास प्रतिभासते रिक्त शून्य इति यावत्। हिण्डते गायन्तीति हेतो। हे कोकिलरमणि तवापि कण्ठ कुण्ठत्व प्राप्त इति प्रतिभासते गायन्तीति हेतो। विरहस्य गानेन अशोकस्य च पादघातेन दोहद पूरयन्तीति। कोऽर्थ। यस्मात्कारणादिह वने गान कुर्वती हिण्डत तस्मात्तुयोः कार्य नाम्नाति आर। 3) मत्तंबुवाहेत्यत्र मेघ त्वया वर्षता समहित (सांप्रत) इव तव समाकर्णय शृणु। क। महीतले। कि यदाह—हंसाना कलशब्देन यत्सरो मनोहरमासीत् तद् दर्दुररटिताकुल निर्मित एतदेव भवता कृत नान्यद्यत मेघस्य निन्दा।

१ निरङन CD, निरङय \ २ मुतचाग A ३ हुअ A ४ सरइ वेरि॰ P, संपय वेरिविहूअण D ५ पाउससिरि नाइ \CD\ ६ पइ P ७ चपाचल्गा DY ८ उगौ च \ ९ तहार \ १० गइविलास पडिहाइ \ ११ कोइलरमणिअ P १२ कक्केल्लिहि P १३ लगौ च A १४ पइ \CD\ १५ समहिओ YP १६ आयण्णु A, आयण्णउ B १७ सरइ P १८ महीअलि A १९ विरइओ YP; विरइउ A २० दुदुर A, दद्दुर A. २१ रडिआउल ५. २२ निम्मिओ A

**चरजमगा आमोदः ॥ ११ ॥**

चतुर्मात्रो रगणजगणमगणाः गुरुश्च आमोदः। यथा—

[1]असोअमञ्जरीफुरंतआमोएसु,
कलरोलम्बवृंद्काअलीसद्देसु।
अणवरय वहंतसारंणीतोएसु,
धन्ना पे वि जे रमति उज्जाणेसु ॥ ११ १ ॥

**म्रल्गपासा विद्रुमः ॥ १२ ॥**

मगणरगणौ लघुगुरू पगणद्वयं सगणश्च विद्रुमः। यथा—

[2]भूवेल्लि चावय मणोहवस्स ससितुल्ल वयण,
अग चामीअरप्पह अहिणवक्मलदल नयण।
तीए हीरावलिं व दंतपंतिं विदुमं अहर,
पेच्छताण पुणो पुणो काण न हवइ मण विहुर ॥ १२ १ ॥

**रो मीमेंघः ॥ १३ ॥**

रगणो मगणचतुष्टयं च मेघः। यथा—

[3]मेहय मत्त गंज्जत सनद्ध पेच्छता,
उब्भडेहिं विज्जुज्जोएहिं घोरेहिं मुच्छता।
केअईरगधेणोद्दामेसु मग्गेसु गच्छता,
ते कह जीअते कताण दूरेण अच्छता ॥ १३ १ ॥

**त्रयल्गा विभ्रमः ॥ १४ ॥**

तगणरगणयगणा लघुगुरू च विभ्रमः। यथा—

[4]लायण्णविब्भम तरंगतिहिं,
निद्दड्ढवम्मह जिआवतिहिं।

1) असोअमञ्जरीत्यत्र त एव केऽपि पुरुषा धन्या ये उद्यानेषु रमन्त। अशोकमञ्जरीणां स्फुरन्त आमोदा येषु त[षु]। पुन कलरोलम्बवृन्दाना काकलीशब्दो येषु तषु। अनवरत वहन्त्य सारण्यस्तासां तोय येषु तथा अधना वहसारणानां तोय येषु तषु। 2 भूवल्लिं चावयमित्यत्र भ्रूवल्लरि चापमिव चापक मनोभवस्य शशितुल्य वदन चामीकरप्रभ शरीर अभिनवकमलदलमिव नयन हीरावलिमिव दन्तपङ्क्तिं विद्रुम मिवाधर तस्या प्रेक्षताम्। [कथा]। पुसा पुन पुन न भवति मन। कीदृक्। विधुर विह्वलम्। 3) मेहय मत्तमित्यत्र। त पुरुषा दूरण महकान्तार (the com seems to read कतार for कताण) गच्छन्त सन्त कथ जीवन्ति। कि कुर्वन्त। पश्यन्त। कम्। मदोन्मत्त गर्जन्त सन्नद्ध मेघक मूर्च्छयन्त। कै। उद्भटै घोरै विद्युद्द्योतै केतकीग धनोत्कटेषु मार्गेषु सत्सु। 4) लायण्णविब्भम इत्यत्र लावण्यविभ्रम तरङ्गन्ताभि निर्दग्धक दर्प जीवयन्ताभि एवंविधाभि प्रियाभि प्रेम्णा विलोक्यते तथा मर्त्यलोक एव स्वर्ग प्राप्यते।

१ चद्द D\S २ सारसी S ३ म्रल्गापासा DN ४ भ्रूवाल N ५ विद्रुम CS ६ गर्जंत O ७ लगौ च A

प्रेमिं प्रियाहिं जे पुलोइज्जइ,

ता मत्तलोइ सग्गु पाविज्जइ ॥ १४.१ ॥

मेघविभ्रमौ वृद्धैरपभ्रंशे एव निबद्धाविति[1] वर्णवृत्तेषु नोक्तौ ॥ १४.१ ॥

**चपजगगाः कुसुमः ॥ १५ ॥**

चतुर्मात्रः पञ्चमात्रो जगणो गुरुद्वयं च कुसुमः । यथा –

[2]निच्छिउ करिवि चंदु [1]दोण्णि खंडें,

तहि निम्मिअ मयनयणाइ गंड ।

वरकुसुम घडेविणु गंधचंगु,

कोमलु तइँ विरइउँ एहु अंगु ॥ १५.१ ॥

इहान्येऽपि चन्द्रक-खञ्जकान्त-चञ्चल-चलतनु-वीरप्रिय-कुपित-रुद्र-कृष्ण-सित-धनद-कुरर-शिवादयो रासकभेदा वृद्धैरुपनिबद्धास्ते तु क्वचित्केचिदन्तर्भवन्तीत्यस्माभिर्नोक्ताः ॥ १५.१ ॥

**ओजयुजोश्छडा रासः ॥ १६ ॥**

विषमसमयोः पादयोः यथासंख्यं छाः इति सप्त, डाः इति त्रयोदश मात्राः यत्र स रासः । यथा –

[3]सुणिवि वसंति,

पुरवोहपुरंधिहिं रासु ।

सुंमरिवि लडह,

हुअ तक्खणि पहिउ निरासु ॥ १६.१ ॥

**पाचदाश्चिस्तृतीये पञ्चमे चो जो लीर्वा**
**पञ्चांह्रिस्त्रिपात्पूर्वार्धा[4] मात्रा ॥ १७ ॥**

ओजे पादे प्रथमे तृतीये पञ्चमे च द्वौ पञ्चमात्रावेकश्चतुर्मात्रो द्विमात्रश्चैकः । युजि पादे द्वितीये चतुर्थे च त्रिचगणत्रयम् । तथा तृतीये पञ्चमे च पादे चतुर्मात्रो जो लीर्वा । एवं पञ्चपदी पादत्रयेण कृतपूर्वार्धा मात्रानाम च्छन्दः । यथा –

1) वर्णवृत्तेषु नोक्तावित्यत्र अन्यथा पञ्चदशाक्षरायामुक्तमभविष्यत् । 2) निच्छिउ करिवीत्यत्र अयं निश्चयः । कः । एतस्या मृगनयनायाः गण्डौ चन्द्रस्य खण्डद्वयं कृत्वा निर्मितौ । तथा एतस्या गन्धचंगं कुसुमं घटित्वा एतत्कोमलमङ्गं घटितम् । अर्थादाश्चर्येति भावः । अत्यद्भुतदर्शनात् । 3) सुणिवि वसंति इत्यत्र वसन्ते पौरवधूपुरन्ध्रीणां रासं [श्रुत्वा] तथा लटभान् स्मृत्वा तत्क्षणे पथिको निराशो जातः । 4) पूर्वार्धा मात्रेत्यत्र चतुष्पदार्थं तृतीयपादेऽर्धविधानम् ।

१ दोण्णि BEP. २ चंदु BE. ३ निम्मिअ B. ४ मयणरणाइ C. ५ कोमल ACP. ६ तुह AP. ७ विरइय A; विरइओ N; विरइंओ S. ८ सुणवि AE. ९ पुरधिहि A; पुरंध्रिहि BE; पुरंधिहिं P. १० सुमरवि P. ११ हुअं B; हुओ N; अ dropped in D.

[1]"मत्तकोइलनायणंदीइ, सिंगाररसोग्गमिण,
नच्चमाणमायंदपत्तिहिं।
अहिणिज्जइ मयणजय-, नाढउव्व संपइ वसंतिण ॥ १७.१ ॥

प्रायोग्रहणात्संस्कृतेऽपि। यथा–

[2]"शुष्कशिखरिणि कल्पशाखीव, निधिरधनग्राम इव,
कमलखण्ड इव मारवेऽध्वनि।
भवभीष्मारण्य इह, वीक्षितोऽसि मुनिनाथ कथमपि ॥ १७.२ ॥

**द्वितीये तुर्ये तयोर्वाद्यस्य चः स्थाने पो मत्तवालिका ॥ १८ ॥**

मात्रैव द्वितीये तुर्ये वा पादे क्रमेण युगपद्वा तयोराद्यस्य चगणस्य स्थाने पगणश्चेत्तदा मत्तवालिका। तत्र द्वितीये पादे प्रथमस्य चस्य स्थाने पः। यथा–

[3]"कुमुअकमलहं एक्क उप्पंत्ति, मउलेइ तु वि कमलवणु,
कुमुअसंडु निचु वि विआसइ।
सच्छंद विआरिणिअ, चंदजोण्ह किं मत्तवालिअ ॥ १८.१ ॥

चतुर्थे यथा–

[4]"गहिरु[11] गज्जइ धरइ मयवारि, विहलंघलु नहु कमइ,
दुन्निवारु[12] दिसिदिसि पलोट्टइ।
ओ मत्तवालि[13]असरिसु, विसमचिट्ठु[14] पाउसु पयट्टइ ॥ १८.२ ॥

1) मत्तकोइलेत्यत्र वसन्तेन अभिनीयते मदनजयनाटकं मत्तकोकिलनाद एव द्वादशतूर्यनिर्घोषो नान्दी यत्र। शृङ्गाररसेन उग्गमिणं प्रधानम्।* 2) शुष्कशिखरिणीत्यत्र तिलकमञ्जर्यां अदृष्टपारसरस्तीरे वनखण्डे स्फाटिकचैत्ये श्रीयुगादिजिनं दृष्ट्वा कुमारस्मरकेतुना नमस्कारोऽयमुक्तः। शुष्कशिखरीति–शुष्कगिरौ कल्पशाखीव कल्पवृक्ष इव निर्धनग्रामे निधिरिव निधानमिव मारवे मरुमण्डलसंबन्धीयाध्वनि कमलखण्डमिव हे भगवन् तथा भवभीष्मारण्ये नाथ त्वं दृष्टोऽसि हे मुनिनाथ इह संसारे कथमपि महता कष्टेनेत्यर्थः। 3) कुमुअकमलहमित्यत्र कुमुदकमलानामेकमेवोत्पत्तिस्थानं तथापि चन्द्रज्योत्स्ना नित्युवि निशास्वपि कमलवनं मुकुलयति सकोचं प्रापयति कुमुदवनं विकाशयति। तदा स्वच्छन्दं चरतीति स्वच्छन्दचारिणी मत्ता धामौ बालिका च पीतामद्य (पीतमद्या) बालिकेव। सापि ईदृशी भवति। 4) गहिरु गज्जइ इत्यत्र प्रावृट् प्रवर्तते। कीदृशी। उन्मत्तबालिकासदृशी। विषमा चेष्टा यस्याः सा गम्भीरं यथा भवति तथा गर्जति। सापि पीतमधा शब्दं करोति। प्रावृट् प्रभूतं वारि धरति प्रावृट् विह्वला सती नभ आक्रमति। विह्वलेति–प्रसरणशीलापि वेह्वला सती न क्रामति। दु निश्चितं दुर्निवारं यथा स्यात्तथा प्रलुठति क्षोभं प्राप्नोति। क। दिशि।

१ णायणं॰ BP. २ रसोग्गमिण N. ३ पत्तहि AN. ४ कमलषण्ड इव BE. ५ चस्थाने ADO. ६ उप्पंति N. ७ कुमुअखंड A; कुमुणसंडु N. ८ सेच्छंद S. ९ विआरणिअ AD. १० मत्तवालिया A; त्तवालिआ N. ११ गहिर A. १२ दुन्निवार A. १३ मत्तवालय BP. १४ विसमिचिट्ठ पाउस A.

द्वितीयचतुर्थयोर्यथा —

"पेच्छ पाउसलच्छि उच्छलइ, मउलंति सव्वाउ दिस,
घद्दद्दंति घणमत्त वालिअ।
फुट्टंति केअइकुसुम, पिइ पउत्थि कह जिअइ वालिअ॥ १८.३॥

तृतीयस्य तो मत्तमधुकरी॥ १९॥

मात्रैव द्वितीयचतुर्थयोः पादयोः क्रमेण युगपद्वा तृतीयस्य चगणस्य स्थाने तगण श्चेत्तदा मत्तमधुकरी। तत्र द्वितीयपादे तृतीयचगणस्य ते मत्तमधुकरी। तद्यथा —

"मत्तमहुअरितारझंकार, कलयंठिकलयलिहिं,
मयणधणुह टंकारसरिसिहिं।
कह जीवहुं विरहिणिउं, दूरदेसपवसंतरमणिउ॥ १९.१॥

तुर्ये पादे यथा —

"फुडिअकेसरतिलयमायंदि, पप्फुल्लिअकमलवणि,
सुरहिमासि संपइ पयट्टइ।
मत्तमहुअरिरविण, मयणचरिउ वणलच्छि गायइ॥ १९.२॥

उभयोर्यथा —

"गुणविवज्जिइ पुरिसि रवेइ, गुणवंति परंमुही,
तह य पंकउप्पन्नि निवसइ।
मत्तमहुअरि कमलि, अहह लच्छि अविआरि विलसइ॥ १९.३॥

तृतीये पञ्चमे तयोर्वा पोऽथौ मत्तविलासिनी॥ २०॥

मात्रैव तृतीये पञ्चमे च पादे तयोर्वा युगपदाद्ययोः पगणयोः स्थाने चगणौ चेत्तदा मत्तविलासिनी। तत्र तृतीये पादे पोः स्थाने चौ। यथा —

[1]"समयमयगलगमणरमणिज्जु[1], मयभिंभलनयणजुउ,

आरत्तकवोलसोहिरु ।

मत्तविलासिणिनिअरु, हरइ चित्तु लहुरं[2]पयंपिरु ॥ २०.१ ॥

पञ्चमे यथा –

[2]"मत्तजलहर गहिरु[3] गज्जंति, केकारहिं[4] मत्तसिहिं,[5]

मत्तु मयणु पहरेइ दुज्जउ ।

विणु मत्तविलासिणिहिं, भणि सपइ[6] काइं किज्जइ[7] ॥ २०.२ ॥

उभयोर्यथा –

[3]"ते[8] ज्जि पंडिअ ते ज्जि गुणवंत, ते तिहुअणसिरं उवरि[9] ।

ताहं चिअ जम्मु जाणहु[10] ।

जे मत्तविलासिणिहिं, न वि खोहिअ[11] मुद्धझाणहु[12] ॥ २०.३ ॥

चस्य पो मत्तकरिणी ॥ २१ ॥

मात्रैव तृतीये पञ्चमे च पादे[13] उभयोर्वा पादयोश्चगणस्य[14] स्थाने पगणश्चेत्तदा मत्तकरिणी । तत्र तृतीये पादे चस्य स्थाने पः । यथा –

[4]"जासु अंगहिं[15] घणु[16] नसाजालु, जसु पिंगल नयणजुउ,[17]

जासु[18] दंत पविरलविअड्डुलय ।

न धरिज्जइ दुहकरिणी[19], मत्तकरिणि जिम्व घरिणि[20] दुन्नय ॥ २१.१ ॥

1) समयमयगलेत्यत्र विलासिनीनिकरश्चित्तं हरति समदो यः मदकलो हस्ती तस्य यद्‌गमनं तद्वद्‌गमनेन राजमानः मदेन भिंभल मन्थर नयनयुगलं यस्य सः आरक्तकपोलेन शोभनशीलः लघुरं अव्यक्तं प्रजल्पशीलः । 2) मत्तजलहरेत्यत्र मत्तजलधरे गभीरं गर्जति तथा मत्तशिखिनि केकारवेण [युक्ते] सति, मत्तमदनः प्रहरति । हे मुग्धा, मत्तविलासिनीभिर्विना किं क्रियते सांप्रतम् । 3) तेज्जिअ पंडिअ इत्यत्र ये पुरुषा मत्तविलासिनीभिः नापि क्षुभितमुग्धध्यानास्त एव पण्डितास्त एव गुणवन्तः त एव त्रिभुवनशिरसि उवरीति ऊर्ध्वस्थानीयाः शेखरायमाणा इत्यर्थः । तेषामेव जन्म निश्चयेन नान्येषामित्यर्थः । क्लीबप्रायास्ते हि ज्ञेयाः । 4) जासु अंगहिमित्यत्र यस्या अङ्गे घनं नसाजालं भवति यस्या नयनयुगलं पिङ्गलं भवति यस्याश्च दन्ताः प्रविरलाः । पुनः कीदृशाः । विकटोच्चना वक्रा इति यावत् । एवंविधा दुर्नया गृहिणी गृहे न ध्रियते दुःखकारिणी । केव । मत्तकरिणीव हस्तिनीव । एवंविधकुलक्षणा स्त्री न पाणौ क्रियते इति भावः ।

१ रमणिज्ज ABCDN. २ लहर K; लहुर S ३ गुहिर A. ४ केक्कीरहिं S. ५ मत्तसिहि B. ६ सपय B. ७ किज्जइ B. ८ तेजि E. ९ सिरि उवरि A. १० जाणह E. ११ खोइअ N. १२ झाणओ BN; झाणहो A. १३ पादे dropped in A. १४ चगणस्थाने AB. १५ अंगिहिं AP. १६ घणु-नयाजालु A. १७ जसु पिं० A; जसु पिंगलु नयणजुऊ B. १८ जासु A. १९ दुहकरिणि D; दुहकरणि P, दुहकरणी S. २० घरिणि BP.

पञ्चमे यथा—

[1]दिव्व कहिं ते मत्तकरि णीअ, कहिं घलिअ भिचभडा,
कहिं निहित्त हयवर वहिल्लय।
ढुंढोल्लिरं गिरिगहणि, इअ तुज्झ रिउ रोअहिं गहिल्लय ॥ २१.२ ॥

उभयोर्यथा—

[2]जेत्थु गज्जहिं मत्तकरिणिवह, रंखोलहिं जत्थु हय;
जेत्थु भिउडिभीसण भमंति भड।
तहिं तेहइ रणि वरइ, विजयलच्छि पइं पर समरोब्भड ॥ २१.३ ॥

आभिर्बहुरूपा ॥ २२ ॥

आभिर्मात्रादिभिः संकीर्णाः बहुरूपा। यथा—

[3]गाम्भि पट्टणि हट्टि चउहट्टि, राउलि देउलि पुरि,
जं दीसइ लडहंअंगिअ।
विरहिंदजालिएंण तं, सा एक वि कय बहुरूवकलिअं ॥ २२.१ ॥

अत्र प्रथमः पादो मात्राया द्वितीयो मत्तमधुकर्यास्तृतीयो मत्तविलासिन्याश्चतुर्थो मात्रायाः पञ्चमो मत्तकारिण्याः ॥ २२.१ ॥

आसां तृतीयस्य पञ्चमेनानुप्रासेऽन्ते
दोहकादि चेद्वस्तु रड्डा वा ॥ २३ ॥

आसां मात्रादीनां तृतीयपादस्य पञ्चमेन पादेनाऽन्तेऽनुप्रासेऽन्ते दोहकापदोहकापदोहकाश्चेत्तदा रड्डा वस्तु वा। यथा—

[4]लुढिदुं चंदणवलिपल्लंकि, संमिलिदु लवंगवणि,
खलिदु वत्थुरमणीयकयलिहिं।
उच्छलिदुं फणिल्लैयहिं, घुलिदु सरलकफोललयलिहिं ॥

1) दिव्व कहिं ते मत्तेत्यत्र। हे दे(दै)र ते मत्तकरिणः कहिं क नीताः तथा ते भृत्यभटाः क क्षिप्ताः तथा हयवररथाः क निहिताः। वहिल्लयेति वहिलीति प्रसिद्धिः। एव ढुण्ढोल्लिरः भ्रमणशीलः सन्। क। गिरिगहने अधि(हि)तः सन् तव रिपुः रोदिति। 2) जेत्थु गज्जहिं इत्यत्र यत्र संग्रामे मत्तकरिनिवहा गर्जन्ति यत्र हयाः रे(र)खोलहित्ति पतन्ति यत्र भृकुटीभीषणा भ्रमन्ति भटाः तस्मिंस्तादृशे रणे परं केवलं समरोद्भटे त्वामेव विजयलक्ष्मीः वृणुते नान्यमिति रणोद्भटता। 3) गाम्भि पट्टणि इत्यत्र ग्रामे पत्तने हट्टश्रेण्यां देवकुले पुरे लडहअंगीति विलासांगी यद्दृश्यते सा एकापि विरहेन्द्रजालिकेन कृतबहुलरूपा दृश्यते। कोऽर्थः। विरहवशात्सैव सर्वत्र दृश्यते इत्यर्थः। 4) लुढिदु चंदणवल्लि इत्यत्र मलयसमीरः चन्दनवल्लिपल्यङ्के लुठितलवङ्गवने संमिलितः परमार्थरमणीयकदलीभिः स्खलितः नागवल्लीषु उच्छलितः सरलककोलल्लवल्लीभिः घूर्णितः पुष्पितां माधवीवल्लरीभिः पुलकितं कामिनां शरीरं यस्मात्। स पुनः कीदृक्। रड्डो पुष्टः। कीदृशः। भ्रमरसदृशः। भ्रमरस्यापि यथायोगं विशेषणानि वाच्यानि एवंविधः सञ्चरति प्रसर्पतीत्यर्थः।

१ N wrongly puts कहिं also before दिव्व, but drops it before निहित्त in the 3rd line. २ णीओ A; णीअ P. ३ भिचभड BEP; भिचतड A. ४ ढुंढुर BE. ५ गहेडअ B. ६ जत्तु E. ७ गज्जिहिं P. ८ जेत्थु BFP. ९ भाउण A. १० लडहिअंगिय A. ११ जालएण ACDN; १२ कलिआ ACDN. १३ लुटितु B; लुढिदुं N. १४ उच्छिलिदु A. १५ फणिवल्लहि A.

चुंबिदु माहविवल्लरिहिं, पुलइदकामिसेरीरु ।
भमरसरिच्छउ संचरइ, रहुँउ मलयसमीरु ॥ २३.१ ॥

## मात्राप्रकरणम् ।

*

**चौ लान्ततौ चौ तो वस्तुकम् ॥ २४ ॥**

चगणद्वयं द्वौ च लघ्वन्तौ तगणौ चगणद्वयं तगणश्च पादे चेत्तदा वस्तुकं चतुर्भिः पादैः । यथा –

[1]सुरवहुमहुअरिपंतिपीअगुणपरिमलजालहं,
नहमणिकिरणकलावचारुकेसरनिअरालहं ।
पत्थुअवत्थुअगीतिचारुमुणिनिवहमरालहं,
तिहुअणसिरिकुलहरहं नमहु जिणपहुपयकमलहं ॥ २४.१ ॥

**पचिपा युज्यंज ओजे जो लीर्वा वस्तुवदनकम् ॥ २५**

एकः षण्मात्रश्चगणत्रयं षण्मात्रश्च वस्तुवदनकम् । अत्रापवादः समे जगणरहितश्चगण ओजे जो लीर्वा । यथा –

[2]मायाविअहं विरुद्धवायवसवंचिअलोअहं,
परतित्थिअहं असारसत्थसंपाइअमोहहं ।
को पत्तिज्जइ सम्मदिट्ठिजहवत्थुअवयणहं,
जिणहं मग्गि निच्चलनिहित्तमणु करुणाभवणहं ॥ २५.१ ॥

वस्तुकमित्यन्ये । [3]अत्र केचित्षोडशभ्यो लघुभ्य आरभ्य लघुद्वयवृद्ध्या वंशादीन् वस्तुकविशेषानाहुः । यथा –

वंसो वित्तो वालो वाहो वामो वलाहओ विंदो ।
विद्धो विसो विसालो विसारओ वासरो वेसो ॥ २५.२ ॥

---

1) सुरवहुमहुयरीत्यत्र सुरवधूमधुकरीपङ्क्तिपीतगुणपरिमलजालं समोहं(?) नभोमणिः सूर्यः तस्य किरणाखद्वत् केसरनिकरसयुक्तं प्रस्तुतवस्तुकगीतिषु चारवो ये मुनयस्त एव मराला यत्र त्रिभुवनश्रीकुलगृहं एवंविधं जिनप्रभुपदकमलं नमत । 2) मायाविअहं इत्यत्र कः सम्यग्दृष्टिः परतीर्थिकं प्रत्येति प्रत्ययविषयं करोति अपि नु न कोऽपि । कथंभूतम् । मायया वितथं भलीक्वादिनं पुनः विरुद्धवादवञ्चितलोकं असारशास्त्रसंपादितमोहम् । कः कीदृक् । निश्चलं यथा स्यात्तथा भवति निहितं स्थापितं मनो येन । क । जिनानां मार्गे । कीदृशे । करुणाभवने । 3) अत्र केचित् षोडशभ्यो लघुभ्य इत्यत्र १६ मात्रात्मके वस्तुवदनके वस्तुकापरनाम्नि षोडश लघवो यत्र स वंशाह्वः अष्टादशभिर्वित्त इत्यादि यथाक्रमं ज्ञेयम् । वत्तोत्ति वरः । मयमउत्ति मृगमदः । मउत्ति मृगः । [ मउलत्ति ] मुकुलः । मुहोत्ति मुखः । चउवीसकलेत्यत्र चतुर्विंशतिकलात्मकपदम् ।

---

१ पुलइदु AE; पुलइद S. २ कामिसरीर AC, कामिसरीरह S. ३ संचरदु A. ४ रहउ dropped in A; रहुउ N. ५ वत्थव S. ६ गीइ F; गीय B; गीती A. ७ तिहूअण॰A; तिहुयणि॰ B. ८ नमह P. ९ जिणपहपय॰ DN; जिणपहुपयकमहल A. १० युज्यश्च ओजे N. ११ समदिट्ठि F; सम्मादिट्ठि D; समदिट्ठि S. १२ नहवत्थुअवयणीहं S. १३ मग्ग F. १४ निचलनि॰ मण A; निश्चलनि॰ मणु N; निश्चनि॰ मणु E. १५ इत्येके AF. १६ लघुद्वय २ वृध्या F. १७ विसारओ S.

तुंगो रंगो भिंगो भिंगारो भीसणो भचो भालो।
भद्दो भग्गो भट्टो भीरू तत्तो भडो भसलो ॥ २५.३ ॥
अलओ घलओ मलओ मंजीरो मयमओ मओ माणी।
महणो मसिणो मउलो महो मुंहो मईहरो मुहलो ॥ २५.४ ॥
एए नामनिबद्धा चउवीसकला हवंति वत्थुवया।
सोलहेलहुआउ लहेहिं वद्धमाणेहिं दोदोहिं ॥ २५.५ ॥

एते च वस्तुवदनकप्रस्तारान्तर्भूतत्वात् पृथङ् न लक्षिताः। तत्प्रस्तारे हि अष्टौ कोटीकोट्यः समधिकास्ततः कियन्तो भेदाः परिगणयिष्यन्ते इत्यास्तां तावत् ॥ २५.५ ॥

पोऽजचः पपौ रासावलयम् ॥ २६ ॥

आदौ षण्मात्रस्ततः जगणरहितः चतुर्मात्रस्ततः षण्मात्रपञ्चमात्रौ यत्र तद्रासावलयम्। यथा–

"माणु म मेल्हिं गहिल्लिएं निहुईहोहि रणु,
उअर्चउ चंदु पयट्टउ रासावलयरणु।
दिक्खिसु एहि वि नयणिहिं पईं हलि" मयणहय,
वहइ पयंद्द पढंति भणंति अ वयणसय ॥ २६.१ ॥

इदं चतुष्पदी वस्तुकं चेत्येके ॥ २६.१ ॥

द्वयोरर्धसङ्करे सङ्कीर्णम् ॥ २७ ॥

द्वयोर्वस्तुवदनकरासावलययोरर्धयोः सङ्करे यदि वस्तुवदनकस्य पूर्वार्धं रासावलयस्योत्तरार्धं रासावलयस्य वा पूर्वार्धं वस्तुवदनकस्योत्तरार्धं तदा सङ्कीर्णम्। क्रमेण यथा–

अविहेडअवरुप्परपरूढगुणगंठिनिबद्धउ,
अइआरिण हलि गलइ पेम्मु सरलिमसयलद्धउ।
माणमडप्फरु तुह न जुत्तु उत्तिमरमणि,
"तिंभणि वारउं वारवार वारणगमणि ॥ २७.१ ॥
सवणंनिहिअईरयदसंतकुंडलजुअलें,
थूलामलमुत्तावलिमंटिअथणकमल।
सेमंसुअपंगुरणहल्लसिरिहिंदरसुज्जल,
पहुघरगुसविअइड्डफुड्डरुप्पाविमउंजल ॥ २७.२ ॥

**पचचाद्दो वदनकम् ॥ २८ ॥**

पचचेभ्यः परो द्विमात्रश्चेत्तदा वदनकम् । यथा–

[1]"अज्ज वि नयणं न गेण्हई तरलिम, अज्ज वि वयणु न मेल्लई भोलिम ।
अज्ज वि थणहरु भरु न पडिच्छइ, तुवि मुद्धहें दंसणि जगु मुज्झई ॥ २८.१ ॥

केचित्समचतुष्पदीषु पचचदाः संकुलकमिति पठन्ति । तदत्रैवान्तर्भूतम् ॥ २८.१ ॥

**त उपवदनकम् ॥ २९ ॥**

पचचेभ्यः परस्त्रिमात्रश्चेत्तदोपवदनकम् ॥ यथा–

[2]"आमूलु वि बहुपंकिण संवलिअ, सव्ववारपडिबोहसोहरहिअ ।
कंटयसयसंसेविअ जलसयण, जिणउववयणु न सोहहि कमलवण ॥ २९.१ ॥

**ते यमितेऽन्तेऽडिला ॥ ३० ॥**

ते वदनकोपवदनके चतुर्णां पादानां द्वयोर्द्वयोर्वान्ते यमकिते सत्यडिला । तत्र चतुर्णां यथा–

[3]"नवघणभममभमंतसारंगह, कुंजकुसुमगुंजिरसारंगह ।
मुहविलसंतअडिलसारंगह, लीलावणहं तरणि सारं गह ॥ ३०.१ ॥

द्वयोर्द्वयोर्यथा–

[4]"जहिँ छिज्जहिँ नरसीस भुअग्गल, तहुं नरवहु जा दारभुअग्गल ।
सा मइं सुअणहं कह पारद्धिअ, जं निसुणंव वुद्ध पारद्धिअ ॥ ३०.२ ॥

चतुर्णां यमके मडिलेत्यन्ये ॥ ३०.२ ॥

**पिदावुत्थक्कः ॥ ३१ ॥**

पगणत्रयं द्विमात्रश्चान्ते यमिते उत्थक्कः । अवसितक इत्यन्ये । यथा–

---

1) अज्ज वि नयणेत्यत्र । अद्यापि नयनं चञ्चलत्वं न गृह्णाति । अद्यापि वदनं मुग्धतां न मुञ्चत्यम् । स्तनभरो भारं न प्रतीक्षते नाङ्गीकरोति । स्तनभर इत्यत्र भरशब्दः शोभार्थोऽन्यथा पीनस्तनत्वं स्यात् । पीनौ न भवत इति भावः । तथापि मुग्धाया दर्शनेन जगन्मुह्यति । 2) आमूलु वि इत्यत्र । आमूलादपि बहुपङ्केन संवलितं सर्वदा प्रतिबोधो विकासस्तच्छोभारहितं कण्टकशतेन सेवितं जलशयनं जिनस्य उपवदनं मुखसमीपे कमलवनं न शोभते । तद्धि निष्पङ्कं लोकानां सर्वदा प्रतिबोधकं निःकण्टकं अजडशयनं च । 3) नवघणभमभमंतेत्यत्र नवघनस्य नवीनमेघस्य भ्रमेण भ्रमन्तः सारङ्गा यत्र । सारङ्गशब्देन मयूराश्चातका वा । कविकल्पे श्यामनीलयोरैक्यम् । कुञ्जेषु वृक्षगृहस्थानेषु यानि कुसुमानि तेषु शब्दायमानाः सारङ्गा भ्रमरा यत्र तेषां गुञ्जने विकसन्तो मदैः कान्तोत्कटिता अमन्दलीलासारङ्गा हस्तिनो यत्र मृगा वा येषु । तेषां लीलायमानानां हे मनस्विनि सारं गृहाणेति भावः । 4) जहिँ छिज्जहिँ नरसीसेत्यत्र यत्र छिद्यन्ते नराणां शीर्षाणि भुजार्गला, तस्य नरवस्य वा द्वारभुजार्गला भोगल इति प्रसिद्धा सा मया सुजनानां अग्रे प्रारब्धा कथा । यां शृण्वन्तः पारद्धिका अपि मुग्धाः यत्र परमार्थानिर्मलकार्याणि त्यजन्ते(?) तद्वत्कथा प्रारब्धेति भावः ।

[1]"निद्दड्ढ दड्ढविरहानलेण, संतावतुलिअवडवाणलेण।
मुच्छाविअ नवघणमंडलेण, उअ थेक्क पहिअ कयघंघलेण ॥ ३१.१ ॥

**धवलमष्टषट्चतुष्पात् ॥ ३२ ॥**

अष्टपात्षट्पाच्चतुष्पाच्च धवलं नाम छन्दः। यदाह—

धवलनिहेण सुपुरिसो वण्णिज्जइ जेण तेण सो धवलो।
धवलो चि होइ तिविहो अट्ठपओ छप्पओ चउप्पाओ ॥ ३२.१ ॥

धवलानि च सातवाहनोक्तिषु द्रष्टव्यानि। दिग्मात्रं तूदाहरिष्यते ॥ ३२.१ ॥

**तत्राष्टांह्यावोजे चिदौ समे चौ श्रीधवलम् ॥ ३३ ॥**

तत्र धवलेषु मध्येऽष्टांह्रौ धवले विषमेषु पादेषु चत्रयं द्विमात्रश्चैकः, समेषु पादेषु चद्वयं यत्र तच्छ्रीधवलम्। वसन्तलेखेत्यन्ये। यथा—

[2]"खीरसमुद्दिण लवणजलहि, कुवलय कुमुइहिं।
कालिंदी सुरसिंधुजलिण, महुमहणु हरिणि ॥
कइलासिण सरिसउ हु किरि, सो अंजणगिरि।
इह तुह जससिरिधवलिउ पहु, किं पंडुरु न हु ॥ ३३.१ ॥

**आद्ये तृतीये चिदौ द्वितीये तुर्ये चिः शेषे**
**त्वोजे चातौ समे चादौ चिर्वा यशोधवलम् ॥ ३४ ॥**

अष्टांह्रौ धवले आद्यतृतीययोः पादयोश्चगणत्रयं द्विमात्रश्च। द्वितीयचतुर्थयोश्चगणत्रयम्। शेषेषु चतुर्षु पादेष्वोजयोः पञ्चमसप्तमयोर्द्वौ चगणौ त्रिमात्रश्चैकः, समयोः षष्ठाष्टमयोः चगणद्वयं द्विमात्रश्चैकः, मतान्तरे चगणत्रयं वा, यत्र तद्यशोधवलम्। यथा—

[3]"जे तुह पिच्छहिं वयणकमलु, ससहरमंडलनिम्मलु।
जे वि हु पालहिं भिच्चकम्मु, धुणहिं जि निरुवमु विक्कमु ॥

---

1) निद्दड्ढेत्यत्र निर्दग्धा ज्वलिताः। दग्धः पापीयान् विरहानलस्तेन संतापतुलितवडवानलेन मूर्छां प्रापिताः। नवघनमण्डलेन कर्तृभूतेन उत्पातरूपेण स्थिताः पथिकाः कृतदुःखेन। 2) खीरसमुद्दिणेत्यत्र हे प्रभो तव यशःश्रिया धवलिते सति के के पाण्डुरत्वं न प्राप्ताः। क्षीरसमुद्रस्य सदृशो लवणजलनिधिः हु इति जातः। कुवलयानि श्यामकमलानि कुमुदसदृशानि जातानि। कालिन्दी यमुना सुरसिन्धुजलसदृशी जाता। मधुमथनो हरिः रुद्रस्य सदृशो जातः। किरि इति किलार्थम्। सोऽञ्जनगिरिः कैलाससदृशो जातः। 3) जे तुह पिच्छहि इत्यत्र ये पुरुषाः तव पश्यन्ति वदनकमलम्। कीदृक्। शशधरमण्डलवन्निर्मलम्। ये पुरुषास्ते तव भृत्यकर्म पालयन्ति। ये नरा निरुपमविक्रमं स्तुवन्ति। ये पुरुषाः शासनमाज्ञां धरन्ति। ये पादकमलं प्रणमन्ति। तेषां विमुखी पराङ्मुखी लक्ष्मीर्न भवति। हे यशोधवलितदिङ्मुख।

---

१ निद्दद्द० N; निद्दड्ड० AB; निद्दड्ढ CDK. २ विरहाणलेण P. ३ वडवानलेन A. ४ मुत्थाविअ N. ५ ओ थक्क B, उत्थक्क PK ६ अष्टपात् षट्पात्-चतुष्पात् N. ७ मुउरिमो F ८ वज्जिज्जइ AF, वज्जण्णिइ C. ९ कुसुमहिं CDN. १० महुमहण D. ११ हरिणु P. १२ कइलासण C. १३ रि पडद A; किं पंडद E. १४ चगणत्रयं A. १५ तद्योशो० C. १६ पिच्छहि NS, पेच्छहिं BF १७ मंडलनिम्मल A. १८ धुणिहि A. १९ निरुवमवि० AF.

